कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन् । भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो दुर्लभ एव बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणतरम् ।

उन्नतेषु समुद्रादिव्यतिरिक्तेषु प्रदेशेष्विति यावत् । त इत्यनु[1]शयिनो निर्दिश्यन्ते । इहेति पृथिवी कथ्यते । कथमस्मिन्वाक्ये बहुवचनेनानु[2]शयिनां बहूक्त्या निर्देशः कृतस्तत्राऽऽह—क्षीणकर्मणामिति । कथं तर्हि मेघो भूत्वा प्रवर्षतीत्यादावेकवचननिर्देशस्तत्राऽऽह—मेघादिष्विति । ये पूर्वे मेघादयो नभोन्तास्तेषु प्रत्येकमभिमानिदेवतानामेकरूपत्वात्तदुपश्लिष्टानामनु[3]शयिनामप्येकवचनेन निर्देशो युक्त इत्यर्थः । अतो वै खल्वित्यादिवाक्यं व्याचष्टे—यस्मादिति । अनु[4]शयिनां दुःशकं निःसरणमित्युक्तं प्रपञ्चयति—यत इत्यादिना । मकरादिभिर्भक्षितानामनु[5]शयिनां तेभ्यस्तत्समानजातीयत्वेन समुद्भवो भविष्यतीति चेन्नेत्याह—तेऽपीति । मकरादयोऽपि जलचारिभिरन्यैर्भक्ष्यन्ते तथा च समुद्रे[6] पतितानामनु[7]शयिनां तत्रैव लयः स्यादित्यर्थः । नन्वेवमनु[8]शयिनः समुद्रे लीना न[9] ततः पुनरुद्धर्तुं शक्यन्ते । तथा च कृतविनाशः स्यादित्याशङ्क्या[10]ऽऽह—जलधरैरिति । समुद्राम्भोभिरिति तृतीया सहार्थे । तर्हि सर्पव्याघ्रोपभुक्तानामनु[11]शयिनां तत्समानजातीयदेहभोगः स्यादिति चेन्नेत्याह—भक्षिताश्चेति । ये[12]स्तर्हि सर्पादयो भक्ष्यन्ते तेभ्यस्तत्समानजातीयत्वेनानु[13]शयिनामुद्भवः स्यादिति चेन्नेत्याह—तेऽपीति । तथाऽपि यथोक्तरीत्या परिवर्तनात्ते रेतःसिग्योगमपि यदा कदाचित्प्रपद्येरन्निति चेन्नेत्याह—कदाचिदिति । तथाऽपि भक्ष्येषु जातानां रेतःसिग्योगः सुलभः स्यादिति चेन्नेत्याह—भक्ष्येष्वपीति । इतिशब्दो यच्छब्देन पूर्वेण संबध्यते ।

अथवाऽतोऽस्माद्व्रीहियवादिभावाद्दुर्निष्प्रपतरं दुर्निर्गमतरम्[14] । दुर्निष्प्रपतरमिति[15] तकार एको लुप्तो द्रष्टव्यः । व्रीहियवादिभावो दुर्निष्प्रपतस्तस्मादपि दुर्निष्प्रपताद्रेतःसिग्देहसंबन्धो दुर्निष्प्रपततर इत्यर्थः । यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा[16] भक्षिता अन्तराले शीर्यन्ते । अनेकत्वादन्नादानाम् । कदाचित्काकतालीयवृत्त्या[17] रेतःसिग्भिर्भक्ष्यन्ते यदा तदा

१ क. ग. ठ. °नुशायि° । २ क. ग. ञ. ट. °नुशायि° । ३ क. ख. ग. ञ. ट. ण. °नुशायि° । ४ क. ग. छ. ञ. ट. °नुशायि° । ५ क. ग. ञ. ट. °नुशायि° । ६ ख. छ. ञ. ण. °द्रे परिप° । ७ क. ग. ट. °नुशायि° । ८ क. ग. ठ. °नुशायि° । ९ ख. छ. ञ. ण. न पु° । १० ख. छ. ञ. ण. °दित्यत आह । ११ क. ग. ञ. ट. °नुशायि° । १२ ख. छ. ञ. ण. °र्यैर्हि । १३ क. ट. °नुशायि° । १४ क. ग. घ. च. ट. ठ. ण. °मनत° । १५ ख. घ. ठ. °पतत° । १६ ख. च. ञ. °रे विशी° । १७ ख. ग. घ. ङ. ञ. ट. ठ. ढ. ण. °लीयेन रे° । १८ क. °न्यायेन रे° ।

रेतःसिग्भावं गतानां कर्मणो वृत्तिलाभः । कथम् । यो यो ह्यन्नमत्त्यनुश-यिभिः संश्लिष्टं रेतःसिग्यश्च रेतः सिञ्चत्यृतुकाले योषिति तद्भूय एव तदाकृतिरेव भवति । तदवयवाकृतिर्भूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषितो गर्भाशयेऽन्तः प्रविष्टोऽनुशयी । रेतसो रेतःसिगाकृतिभावितत्वात् । "सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्" इति हि श्रुत्यन्तरात् । अतो रेतःसिगाकृतिरेव भवतीत्यर्थः ।

पूर्वमतःशब्दो हेतुपरतया व्याख्यातः संप्रति व्रीह्याद्यवधिवाचकत्वेन तं व्याचष्टे— अथवेति । दुर्निष्प्रपततरमिति तकारसहिते पाठे सति विवक्षितमर्थमाह—व्रीहियवादीति । तत्र हेतुमाह—यस्मादिति । तर्हि तेषामन्तराले विशीर्णानां देहमाग्रित्वाभावादनुशयवैयर्थ्यमित्याशङ्क्याऽऽह—कदाचिदिति । काकतालीयया वृत्त्या याद्दच्छिकन्यायेनेति यावत् । अनुशयाख्यस्य कर्मणो भाविदेहारम्भार्थत्वान्मुख्यं प्रश्नपूर्वकं विवृणोति—कथमित्यादिना । अनुशयिनो रेतःसिगाकारभाक्त्वे हेतुमाह—रेतस इति । तस्य रेतःसिगाकृत्या तद्देहेन भावितत्वात्संस्कृतत्वात्तदङ्गसंभूतत्वात्तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भवतीत्यर्थः । रेतसो रेतःसिगङ्गसमुत्थत्वे प्रमाणमैतरेयकश्रुतिरित्याह—सर्वेभ्य इति । रेतोरूपेण गर्भाशयं प्रविष्टस्य रेतःसिगाकारत्वमुक्तं निगमयति—अत इति ।

तथा हि । पुरुषात्पुरुषो जायते गोर्गवाकृतिरेव न जात्यन्तराकृतिस्तस्मा-द्युक्तं तद्भूय एव भवतीति । ये त्वन्येऽनुशयिभ्यश्चन्द्रमण्डलमनारुह्यैव पाप-कर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते पुनर्मनुष्यादिभावं तेषां नानुशयिनामिव दुर्निष्प्रपतरम् । कस्मात् । कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदु-पभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलूकावत्संक्रमन्ते सविज्ञाना एव । "सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति" इति श्रुत्यन्तरात् ।

अनुशयिनो रेतःसिगाकारत्वे लौकिकानुभवमनुकूलयति—तथा हीति । चन्द्रस्थलस्खलितानामवरोहतां व्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहान्तरलाभश्चेत्तर्हि

---

१ ग. घ. ट. ढ. ण. °नुशयि° । २ ग. ङ. ट. ड. ढ. °ति । रे° । ३ ग. घ. च. ट. ठ. ड. ण. योषिति । ४ ङ. °येऽनुप्र° । ५ च. °नुशयी° । ६ क. ग. ट. °म्भार्थं मुख्यं । ७ छ. ञ. ण. °न्मुख्यप्र° । ८ क. °नुशयि° । ९ ग. ञ. ड. ण. °नुशयि° । १० क. घ. च. °रुह्यैव । ङ. °रुह्यैवं पा° । ११ क. ङ. °वंगतास्तेषां । १२ क. ख. घ. छ. ढ. °नुशयि° । १३ ग. घ. ट. ड. ढ. °वं ज° । १४ घ. ङ. ठ. ण. जलौका° । १५ छ. °नुशयि° ।

व्रीह्यादिदेहाभिमानिनामपि दुःशकं निष्क्रमणं व्रीह्यादिदेहबन्धविशेषादित्यत आह–येति । व्रीह्यादिदेहसंबन्धाविशेषे कुतस्तद्देहभाजां ततो निःसरणमशक्यं न भवतीत्याशङ्क्य विशेषमाह—कस्मादित्यादिना । "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादिश्रुतिस्मृत्योर्येषां कर्मनिमित्तं स्थावरं जन्म तेषां कर्मक्षय एवावधिः । अवरोहतां तु कर्मासंकीर्तनाद्वैषम्यमित्यर्थः । यथा जलूका तृणात्तृणान्तरं दीर्घभूता संक्रमते न तथाऽनुशयिनो व्रीह्यादिदेहभाजोऽपि तत्त्यागेन देहान्तरं गच्छन्ति । तद्विषयविज्ञानवन्त एवं गच्छन्तीत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति— सविज्ञान इति ।

**यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति तथाऽपि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति । श्रुतिप्रामाण्यात् । तथाऽर्चिरादिना धूमादिना च गमनं स्वप्न इवोद्भूतविज्ञानेन । लब्धवृत्तिकर्मनिमित्तत्वाद्गमनस्य । न तथाऽनुशयिनां व्रीह्यादिभावेन जातानां सविज्ञानमेवं रेतःसिग्योषिद्देहसंबन्ध उपपद्यते । न हि व्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानां स्थितिरस्ति ।**

अथोपसंहृतकरणानां विज्ञाने कारणासंभवात्कथं सविज्ञानत्वं तत्राऽऽह–यद्यपीति । दृष्टकारणाभावेऽप्यदृष्टमेवैकं वासनात्मकं ज्ञानोत्पत्तौ निमित्तमिति । तेन सविज्ञाना एव गच्छन्ति देहान्तरमित्यत्र हेतुमाह—श्रुतिप्रामाण्यादिति । श्रुतिरत्र बृहदारण्यकश्रुतिः । यथा सविज्ञानानामेव व्रीह्यादिदेहान्तरगमनं तथा ज्ञानिनामर्चिरादिना कर्मिणां धूमादिना च गमनं स्वप्नवदुद्भूतवासनात्मकविज्ञानेन सविज्ञानानामेवेत्याह —तथेति । तेषां सविज्ञानत्वे हेतुमाह—लब्धवृत्तीति । अनुशयिनामपि तर्हि व्रीह्यादिषु संश्लिष्टानां रेतःसिगादिदेहसंबन्धः सविज्ञानानामेवेति चेन्नेत्याह—न तथेति । अनुपपत्तौ हेतुमाह—न हीति । व्रीह्यादिसंश्लिष्टानामनुशयिनां सविज्ञानत्वे तल्लवनादौ तज्जीववत्तेषामपि प्रवासप्रसङ्गान्न रेतःसिग्देहसंबन्धः सिध्येदित्यर्थः ।

**ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वाज्जलूकावत्सविज्ञानतैव युक्ता । तथा सति घोरो नरकानुभव इष्टापूर्तादिकारिणां चन्द्र-**

---

१ ग. ट. °दिस्मृ° । २ ख. ग. छ. ट. ण. °वरज° । ३ ख. ग. छ. ञ. ट. ण. °वनग° । ४ ख. च. ञ. ठ. ड. °नुशयि° । ५ ड. ण. °ज्ञानानामे° । ६ ग. ट. ठ ढ °वचरे° । ७ ग. ट. °नेकर° । ८ ख. छ. ञ. ण. °ज्ञानमे° । ९ घ. ङ. ण °ज्जलौका° । १० ग. च. ट. ठ. ड. ढ. °थाचस° ।

मण्डलादारभ्य प्राप्तो यावद्ब्राह्मणादिजन्म । तथा च सत्यनर्थायैवेष्टापूर्तायु-पासनं विहितं स्यात् । श्रुतेश्चाप्रामाण्यं प्राप्तं वैदिकानां कर्मणामनर्थानुबन्धित्वात् ।

व्रीह्यादिषु देहान्तरं गच्छन्तु विज्ञानत्वोपलम्भादनुशयिष्वपि देहान्तरप्राप्तेरविशेषा-द्युक्तं सविज्ञानत्वमिति शङ्कते— नन्विति । तृणात्तृणान्तरं प्रति जलूकागमनवद्वरो-हतामपि देहाद्देहान्तरं प्रति गमनस्य तुल्यत्वाद्व्रीह्यादिवद्युक्ता सविज्ञानतेति योजना । अस्तु तेषां सविज्ञानत्वं का हानिरित्यत आह— तथा सतीति । इष्टापूर्तादिकारि-णामन्तराले नरकानुभवे । तथा च सति तदनुष्ठानस्यानर्थार्थं विहितत्वे श्रेयःसाधन-विषयककर्मकाण्डं विरुध्येतेत्याह—श्रुतेश्चेति ।

न । वृक्षारोहणपतनवद्विशेषसंभवात् । देहाद्देहान्तरं प्रतिपित्सोः कर्मणो लब्ध-वृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तम् । वृक्षाग्रमारोहत इव फलं जिघृक्षोः । तथाऽर्चिरादिना गच्छतां सविज्ञानत्वं भवेत् । धूमादिना च चन्द्रमण्डलमारुरुक्षताम् । न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव प-तताम् सचेतनत्वम् । यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमू-र्च्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा तथा चन्द्रमण्डलान्मानुषादिदेहान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्त-कर्मक्षयान्मृदिताब्देहानां प्रतिबद्धकरणानाम् । अतस्तेऽपरित्यक्तदेहबीजभूता भिरद्भिर्मूर्छिता इवाऽऽकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतयाऽनुद्भूतविज्ञाना एव ।

यथा बुद्धिपूर्वं वृक्षमारोहतां सविज्ञानत्वेऽपि तस्मादबुद्धिपूर्वं पततां न सविज्ञानत्वं विज्ञायते तथा चन्द्रमण्डलमारोहतां सविज्ञानत्वेऽपि ततोऽवरोहतां नैव तदस्ति । उद्भूतकर्माभावात् । इत्यारोहावरोहयोर्ज्ञानविशेषसंभवान्नैवमिति परिहरति—न वृक्षेति । संग्रहवाक्यं विवृणोति—देहादित्यादिना । चकाराद्गच्छतां सविज्ञानत्वं भवेदिति संबन्धः । अवरोहतां जीवानां सर्वथा विज्ञानशून्यत्वमयुक्तं तेषां चैतन्यस्वा-भाव्याद्वृक्षात्पततामपि विज्ञानमात्रमस्त्येवेत्याशङ्क्योदाहरणान्तरमाह— यथा चेति । तेन मुद्गरादिना योऽभिघातस्तेन हेतुना यद्वेदनाख्यं निमित्तं तेन संमूर्छितानि संहृतानि प्रतिबद्धानि वा करणानि येषां तेषामिति यावत् । मृदितोऽभिनष्टो देहोऽम्मयः

१ ख. ग. ञ. ट. ड. °र्थायेष्टा° । २ ङ. ठ. ड. ण. °ष्टायु° । ३ ख. ग. छ. ञ. ट. ण. °हान्त° । ४ ख. ग. छ. ज. ण. °ष्टादि° । ५ च. ठ. ण. तत्फलं । ६ ड. स्वर्भोग° । ७ च. °हभावबी° । ८ ख. छ. ञ. ण. °पूर्वकं वृ° । ९ क. ख ङ. ञ. °पूर्वकं प° । १० ख. छ. ञ. ण. °तनात्र स° ।

स्थूलो देहो येषां तेषां तत एव प्रतिबद्धकरणानां युक्ता विज्ञानशून्यतेति संबन्धः। यथोक्तदृष्टान्तवशाच्चन्द्रमण्डलादवरोहन्तो विज्ञानशून्याः सिध्यन्तीति निगमयति— अत इति। तथाऽपि मूर्छितानां स्थूलदेहसद्भावाद्देशान्तरगमनं युक्तम्। अवरोहतां तु तदभावे कथं व्रीह्यादिभावः संभवतीत्यत आह— अपरित्यक्तेति। न परित्यक्तं देहभावस्य बीजं कर्मापूर्वं याभिस्ताभिरद्भिरुपहिता जीवा मूर्छितवद्विज्ञानशून्या गमनादिक्रमेण पृथिवीं प्राप्य कर्मफलभूतजातिस्थावरशरीरैः संश्लिष्यन्त इति संबन्धः। स्थावरदेहसंबन्धित्वोत्तद्भूतजीववत्तदा सविज्ञानत्वं संभवतीत्याशङ्क्याऽऽह— प्रतिबद्धेति व्रीह्यादिसंश्लेषावस्थायामनुशयिनां कर्मणोऽनुद्भूतवृत्तित्वात्करणानां च तत्र वृत्तिलाभाभावादनुद्भूतविज्ञानत्वं युक्तमित्यर्थः।

**तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणामरेतःसेककालेषु मूर्छितवदेव। देहान्तरारम्भकस्य कर्मणोऽलब्धवृत्तित्वात्। देहबीजभूताप्संबन्धापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावच्चेतनावत्त्वं न विरुध्यते। अन्तराले त्वविज्ञानं मूर्छितवदेवेत्यदोषः।**

न केवलं व्रीह्यादिसंश्लेषकालेऽनुद्भूतविज्ञानत्वं किंतु व्रीह्यादेर्लवनादिकालेऽपीत्याह— तथेति। पाक[ः]संस्कारः। रसादीत्यादिशब्देन शोणितमांसमेदोऽस्थिमज्जरेतांस्युच्यन्ते। तस्मिन्काले मूर्छितवदनुद्भूतविज्ञानत्वे देहाद्बहिर्निर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्येवेति हेतुमाह— देहेति। अलब्धवृत्तित्वादिति च्छेदः। कथं पुनरनुशयिनां विज्ञानशून्यत्वे तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसंहरतीत्यादौ सचेतना जलूका दृष्टान्तत्वेनोपादीयते तत्राऽऽह— देहबीजभूतेति। सर्वास्ववस्थासु तासु व्रीह्यादिसंश्लेषलवनादिवशादिति यावत्। न चेतनावत्त्वं जलूकादृष्टान्ते विवक्षितं किं तु सातत्यमात्रमिति भावः। जलूकावत्त्वं जलूकासादृश्यमनुशयिनामित्यर्थः। आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्यमित्युपाध्याऽऽरोहतामपि यावत्स्वस्थानेभ्यः करणान्युपसंहृत्य हृदयेऽवस्थानं तावदेव सविज्ञानत्वं न देहाद्बहिर्निर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्यनुशयिनां तु चन्द्रमण्डलादवरुरुक्षतामपि न भाविदेहपर्यन्ता वासना दीर्घा भवति प्रमाणाभावादित्याह— अन्तराले त्विति। चन्द्रमण्डलादवरोहतां देहान्तरगमनस्य तुल्यत्वेऽपि विज्ञानशून्यत्वमदुष्टमित्युपसंहरति— इत्यदोष इति।

**न च वैदिकानां कर्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुम्।**

१ ख. छ. ञ. ण. °भिरु°। २ ख. छ. ञ. ण. °त्वाद्ग°। ३ ख. ग. ङ. ञ. ट. ठ. ड. °हार°। ४ घ. ङ. च. जलौका°। ५ ञ. °नुशयि°। ६ ग. घ. ढ. ठ. ड. ढ. ण. °यसाधनत्वं।

हिंसायाः शास्त्रचोदितत्वात् । " अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः " इति श्रुतेः शास्त्रचोदिताया हिंसाया नाधर्महेतुत्वमभ्युपगम्यते । अभ्युपगतेऽप्यधर्महेतुत्वे मन्त्रैर्विषादिवत्तदपनयोपपत्तेर्न दुःखकार्यारम्भकत्वोपपत्तिर्वैदिकानां कर्मणां मन्त्रेणेव विषभक्षणस्येति ॥ ६ ॥

यत्तु हिंसानुग्रहात्म[1]कत्वादिकर्मणां स्थावरत्वमपि तत्फलमेव तथा च वैदिकानां कर्मणामनर्थानुबन्धित्वादप्रामाण्यं श्रुतेरिति तत्राऽऽह—न चेति । उभयहेतुत्वमर्थानर्थहेतुत्वमिति यावत् । अहिंसन्नित्यादिश्रुतेः शास्त्रचोदितवैदिकेषु कर्मसु हिंसा नानर्थहेतुरित्याह—अभ्युपगतेऽपीति । यद्यपि स्वरूपेण हिंसाऽनर्थहेतुरभ्युपगम्यते तथाऽपि तद्युक्ता[2]नां वैदिककर्मणां नानर्थारम्भकत्वं यथा स्वरूपेण विषदध्यादेर्मरणज्वरादिहेतुत्वेऽपि मन्त्रशर्करादिभिः सहोप[3]युक्तं सन्न तत्कार्यारम्भकं तथा हिंसायाः स्वतोऽधर्महेतुत्वेऽपि वैदिककर्मनिष्ठाया न तद्धेतुत्वं वैदिकैरेव कर्मभिस्तत्कृतदोषापनयनसिद्धेरित्यर्थः । पूर्वोक्तमेव दृष्टान्तं स्पष्टयति—मन्त्रेणेति । तेन सहोप[4]भुक्तस्य विषस्यानर्थाहेतुत्वेन पुष्टिहेतुत्ववद्वैदि[5]ककर्मानुप्रविष्टाया हिंसायाः पुरुषार्थत्वमेव । अशुद्धमिति चेन्न । शब्दादिति न्यायादित्यर्थः ॥ ६ ॥

तद्य इह रमणीयचरणा अ[6]भ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अ[7]भ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा[8] सूकरयोनिं वा[9] चण्डालयोनिं वा ॥ ७ ॥

तत्तत्र तेष्व[10]नुशयिनां य इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणा रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणा उच्यन्ते । क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः । तेनानुशयेन पु[11]ण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेणा[12]भ्याशो ह [13]क्षिप्रमेव यदिति क्रियाविशेषणं ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन्प्राप्नुयुर्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्व-

१ ख. छ. ञ. ण. °त्मत्वा° । २ ख. छ. ञ. ण. °नां वेदोक्तानां क° । ३ ञ. ण. °पभुक्तं । ४ ग. ट. °पयुक्त° । ५ ख. छ. ञ. ण. °कधर्मा° । ६ घ. ज. ठ. अभ्यासो । ७ च. ठ. अभ्यासो । ८ क. ज. वा शूक° । ९ ख. ग. वा चाण्डा° । १० घ. ञ. च. ङ. ढ. °नुशायि° । ११ घ. ण. पुण्यक° । १२ घ. °भ्यासो ह । १३ ख. ग. घ. ङ. ञ. ट. °. ङ. ढ. क्षिप्रं य° ।

कर्मानुरूपेण । अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणोऽशुभानुशया अभ्याशो[1] ह[2] यत्ते कपूयां यथाकर्म योनिमापद्येरन्कपूयामेव धर्मसंबन्धवर्जितां जुगुप्सितां योनिमापद्येरञ्श्वयोनिं वा[3] सूकरयोनिं वा[4] चण्डालयोनिं वा स्वकर्मानुरूपेणैव । ये तु रमणीयचरणा द्विजातयस्ते[5] स्वकर्मस्थाश्चेदिष्टादिकारिणस्ते[6] धूमादिगत्या[7] गच्छन्त्यागच्छन्ति च पुनः पुनर्घटीयन्त्रवत् । विद्यां चेत्प्राप्नुयुस्तदाऽर्चिरादिना[8] गच्छन्ति ॥ ७ ॥

तद्भूय एव भवतीत्येतत्प्रसङ्गागतं परिसमाप्य प्रकृतं श्रुतिव्याख्यानमनुवर्तयति—तत्त्रेति । अन्याधिष्ठिते पूर्ववदभिलापादिति न्यायेन तेषु व्रीह्यादिषु संश्लिष्टा येऽनुशयिनस्तेषां मध्ये ये केचिदस्मिँल्लोके चन्द्रमण्डलप्राप्तेः प्रागवस्थायामनुष्ठितामुक्तरमणीयचरणास्ते रमणीयां योनिमापद्येरन्निति संबन्धः । उक्तमेव स्पष्टयति—शोभन इति । कथं रमणीयचरणानुरोधेन शोभनोऽनुशयो लक्ष्यते तत्राऽऽह—क्रौर्येति । ते खल्वनुशयिनो रेतःसिग्योगानन्तरं तेन कर्मणा रमणीयां योनिमापद्येरन्निति यत्तत्क्षिप्रमेवेति योजना । तत्रापि हेतुमाह—स्वकर्मेति । अथेति प्रतीकं गृहीत्वा व्याचष्टे—पुनरिति । तद्विपरीतास्तेभ्यो विलक्षणा इति यावत् । ते कपूयां योनिमशुभा[11]नुशयवशाद्रेतःसिग्योगानन्तरमापद्येरन्निति यत्तदपि क्षिप्रमेवेति योजना । तत्रापि विकल्पे कारणमाह—स्वकर्मेति[12] । योनिविकल्पे तृतीयं पन्थानमवतारयितुं पूर्वोक्तौ पन्थानौ संक्षिप्यानुवदति—ये त्विति । शुभानुशयवशाद्ये केचिद्ब्राह्मणादियोनिमापन्नास्ते स्ववर्णाश्रमविहितकर्मनिष्ठाः सन्तो यदीष्टादिकर्म कृतवन्तस्तदा दक्षिणेन पथा चन्द्रं गच्छन्ति । तत्र च भोक्तव्ये[13] भोगेन क्षीणे पुनरवशिष्टेन कर्मणा पृथिवीमागच्छन्ति । एवं घटीयन्त्रवत्पुनः पुनरारोहन्तोऽवरोहन्तश्च केवलकर्मिणो दृश्यन्ते । चेद्द्विजातयः स्वकर्मस्थाः सन्तो ध्यानं लभेरन्नुत्तरेण यानेनेतो ब्रह्मलोकं गच्छन्तीत्यर्थः ॥ ७ ॥

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥ ८ ॥**

---

१ घ. अभ्यासो । २ ङ. °ह क्षिप्रं य° । ३ क. ख. ङ. च. ढ वा शूक° । ४ क. ङ. ङ. ण. वा चाण्डा° । ५ ङ. ढ. ण. °तयः स्व° । ६ क. °ष्टापूर्तादि° । ७ क. ग. च. ट. ठ. °दिना गच्छ° । ८ ख. ङ. च. ढ. ण. °स्ततोऽर्चि° । ९ ख. छ. ञ. ण. °त्तदपि क्षिप्र° । १० ग. ठ. °ना योनिविकल्पहे° । ११ ख. ग. ञ. ढ. ण °भाश° । १२ ग. ढ. °ति । तृ° । १३ ख. छ. ण. °क्तव्यक° ।

यदा तु न विद्यासेविनो नापीष्टादिकर्म[1] सेवन्ते तदाऽथैनयोः पथोर्यथोक्त-योरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण चनापि यन्ति तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवन्ति। अत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः[2]। तेषां जननमरणसंततेरनुकरणमिदमुच्यते। जायस्व म्रियस्वे[3]तीश्वरनिमित्त[4]चेष्टोच्यते। जननमरणलक्षणेनैव[5] कालयापना[6] भवति। न तु क्रियासु[7] भोगेषु वा कालोऽस्तीत्यर्थः। एतत्क्षुद्रजन्तुलक्षणं तृतीयं पूर्वोक्तौ पन्थानावपेक्ष्य स्थानं संसरताम्। येनैवं दक्षिणमार्गगा अपि पुनरागच्छन्त्यनधिकृतानां ज्ञानकर्मणोरगमनमेव दक्षिणेन पथेति। तेनासौ लोको न संपूर्यते। पञ्चमस्तु प्रश्नः पञ्चाग्निविद्यया[10] व्याख्यातः। प्रथमो दक्षिणोत्तरमार्गाभ्यामपाकृतो दक्षिणोत्तरयोः पथोर्व्यावर्तनाऽपि मृतानामग्नौ प्रक्षेपः समानः ततो व्यावर्तनाऽन्येऽर्चिरादिना यान्त्यन्ये धूमादिना पुनरुत्तरदक्षिणायने षण्मासानामृतुवन्तः संयुज्य पुनर्व्यावर्तन्ते। अन्ये संवत्सरमन्ये मासेभ्यः पितृलोकमिति व्याख्याता। पुनरावृत्तिरपि क्षीणानुशयानां[11] चन्द्रमण्डलादाकाशादिक्रमेणोक्ता। अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तम्। तेनासौ लोको न संपूर्यत इति। यस्मादेवं कष्टा संसारगतिस्तस्माज्जुगुप्सेत। यस्माच्च जन्ममरण[12]जनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते च घोरे दुस्तरे[13] प्रवेशिताः सागर इवागाधेऽप्लवे निराशाश्चोत्तरणं प्रति तस्माच्चैवंविधां संसारगतिं जुगुप्सेत[14] बीभत्सेत घृणी[15] भवेन्मा भूदेवंविधे संसारमहोदधौ घोरे पात इति। तदेतस्मिन्नर्थे एष श्लोकः पञ्चाग्निविद्यास्तुतये॥ ८॥

इदानीं तृतीयस्थानमुपदिशति—अथैतयोरिति। पौनःपुन्येन लोकद्वयैकरचनात्तयोः सर्वभूतेषु विज्ञानात्पुनः पुनर्जायन्ते म्रियन्ते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोग इत्याह—तेषामिति। यद्वा सर्वेश्वरो मार्गद्वयभ्रष्टं दृष्ट्वा तं जायस्व म्रियस्वेति प्रेरयत्येतदिहोच्यत इति द्रष्टव्यम्। तेनासावित्यादि वाक्यं व्याचष्टे—येनैवमिति। उक्तया रीत्या निर्गतानाश्च निश्चित्य प्रतिपादितमर्थं कथयति—पञ्चमस्त्विति। व्यावर्तनाऽपि व्याख्यातेत्युत्तरत्र संबन्धः। मृतानामविदुषां विदुषां चेत्यर्थः। अन्ये त्वयनान्तरं विदुषां कर्मिणां च संवत्सरमिति ज्ञानिनो गृह्यन्ते। अन्ये

---

१ क. °ष्टापूर्तादि°। २ च. ढ. ण. °पां च ज°। ३ ङ. ड. ढ. °स्वेति ज°। ४ ख. च. ञ. ण. °मित्ता चे°। ५ क. °णज°। ६ ङ. °यापिनो भवन्ति। न च. °यातना। ७ क. °पर्न्न म°। ८ ग. ट. तत्र। ९ क. °सु शोभनेषु भो°। १० क. °विद्याया व्या°। ११ ख. ग. ञ. ट. ण. °नुशयिना। १२ घ. ङ. ण. जननम°। १३ ख. ग. घ. ट. ठ. ड. दुरुत्तरे। १४ ङ. ञ. °त घृ°। १५ ग. ङ. °विघसं°।

पितृलोकमिति केवलकर्मिण इति विभागः । क्षीणानुशयानां चन्द्रलोके भोक्तव्यं कर्म भोगेन क्षपितवतामिति यावत् । स्वशब्दमेवानुवदति—तेनेति । किमर्थमेषां महायासवती तीव्रा संसारगतिरुक्तेत्याशङ्क्याऽऽह—यस्मादिति । तृतीयस्थानस्य कष्टत्वं स्पष्टयति—यस्माच्चेति । जन्मादिना जनिता या वेदना तदनुभवे कृतः क्षणोऽवसरो नान्यत्र येषां तथा । अमुत्र इति च्छेदः । तृतीयस्थानवदितरयोरावृत्तिमत्त्वातुल्या कष्टतेत्यभिप्रेत्याह—तस्माच्चेति । संसारगत्युपवर्णनस्य तात्पर्यमुक्त्वा पञ्चाग्निविद्यायामनुष्ठानसिद्ध्यर्थं तस्याः स्तावकं श्लोकमुदाहृत्य व्याचष्टे—तदेतदिमञ्चित्यादिना । पञ्चाग्निविद्यामाहात्म्यं सप्तम्यर्थः ॥ ८ ॥

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाऽऽचरꣳस्तैरिति ॥ ९ ॥

स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता । सुरां पिबन्ब्राह्मणः सन् । गुरोश्च तल्पं दारानावसन् । ब्रह्महा ब्राह्मणस्य हन्ता चेत्येते पतन्ति चत्वारः । पञ्चमश्च तैः सहाऽऽचरन्निति ॥ ९ ॥

॥ ९ ॥

अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य दशमः खण्डः ॥ १० ॥

अथ ह पुनर्यो यथोक्तान्पञ्चाग्नीन्वेद स तैरप्याचरन्महापातकिभिः सह न पाप्मना लिप्यते शुद्ध एव । तेन पञ्चाग्निदर्शनेन पावितो यस्मात्पुनः पुण्यो लोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोको भवति य एवं वेद यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद । द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥ १० ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

१ ख. छ. ञ. ण. °शयिना । २ ख. ङ. ञ. ण. भोक्तव्ये क° । ३ ख. छ. ञ. ण. °धी °ड° । ४ क. ग. घ. ङ. च. ट. ठ. ड. ढ. पतितैः ।

पञ्च महापातकिनः श्लोके निर्दिश्यन्ते न तु पञ्चाग्निविद्यास्तुतिरिह भातीत्याशङ्क्याऽऽह — अथेति । शुद्धत्वे हेतुमाह — तेनेति । कस्येदं फलमित्यपेक्षायां पूर्वोक्तविद्यावन्तमनुवदति — य एवमिति ॥ १० ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां
पञ्चमाध्यायस्य दशमः खण्डः ॥ १० ॥

( अथ पञ्चमाध्यायस्यैकादशः खण्डः ) ।

दक्षिणेन पथा गच्छतामन्नभाव उक्तस्तदेषामन्नं तं देवा भक्षयन्तीति क्षुद्रजन्तुलक्षणा च कष्टा संसारगतिरुक्ता । तदुभयदोषपरिजिहीर्षया वैश्वानरात्मभावप्रतिपत्त्यर्थमुत्तरो ग्रन्थ आरभ्यते । अत्स्यन्नं पश्यसि प्रियमित्यादिलिङ्गात् । आख्यायिका तु सुखावबोधार्था विद्यासंप्रदानन्यायप्रदर्शनार्था च —

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्र-
द्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्व-
तराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य
मीमाꣳसां चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥

प्राचीनशाल इति नामत उपमन्योरपत्यमौपमन्यवः । सत्ययज्ञो नामतः पुलुषस्यापत्यं पौलुषिः । तथेन्द्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्लवेयः । जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यः । बुडिलो नामतोऽश्वतराश्वस्यापत्यमाश्वतराश्विः । पञ्चापि ते हैते महाशाला महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः संपन्ना इत्यर्थः । महाश्रोत्रियाः श्रुताध्ययनवृत्तसंपन्ना इत्यर्थः । त एवंभूताः सन्तः समेत्य संभूय क्वचिन्मीमांसां विचारणां चक्रुः कृतवन्त इत्यर्थः । कथम् । को नोऽस्माकमात्मा किं ब्रह्मेत्यात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वम् । ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं निवर्तयत्यात्मेति चाऽऽत्मव्यतिरिक्तस्याऽऽदित्यादिब्रह्मण उपास्यत्वं निवर्तयति । अभेदेनाऽऽत्मैव ब्रह्म ब्रह्मैवाऽऽत्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म स

१ क. घ. ङ. °का सु° । २ ङ. च. ढ. ण. °लाभिः संयुक्ताः । ३ घ. ङ. °रणां च° । ४ ग. ङ. ज. ट. ठ. ड. ढ. °स्य ।

आत्मेत्येतत्सिद्धं भवति । मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यादिलिङ्गात् ॥ १ ॥

पूर्वोत्तरसंदर्भयोः संबन्धं दर्शयन्नुत्तरसंदर्भमवतारयति—दक्षिणेनेत्यादिना । उत्तरग्रन्थस्य वैश्वानराख्यात्मभावप्रतिपत्त्यर्थत्वे गमकमाह—अस्तीति । विद्यायाः संप्रदानं शिष्यस्तस्य न्यायो विनयादिसंपत्तिस्तत्प्रदर्शनार्था चाऽऽख्यायिका । दृश्यते चात्र प्राचीनशालप्रभृतीनां तत्संपत्तिरित्याह—विद्येति । कथमात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं व्यावर्त्याभावादित्याशङ्क्याऽऽह—ब्रह्मेति । उक्तरीत्या मिथो विशेषणविशेष्यत्वे फलितमाह—अभेदेनेति । इतश्चोपास्यस्य सर्वात्मत्वं गम्यते परिच्छिन्नोपासनस्य निन्दितत्वाद्भूम्न ऋतुवज्ज्यायस्त्वमिति न्यायादित्याह—मूर्धेति ॥ १ ॥

ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥

ते ह मीमांसन्तोऽपि निश्चयमलभमानाः संपादयांचक्रुः संपादितवन्त आत्मन उपदेष्टारम् । उद्दालको वै प्रसिद्धो नामतो भगवन्तः पूजावन्तोऽयमारुणिररुणस्यापत्यं संप्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति । तं हन्तेदानीमभ्यागच्छामेत्येवं निश्चित्य तं हाभ्याजग्मुर्गतवन्तस्तमारुणिम् ॥ २ ॥

भगवन्तः सन्तः संपादयांचक्रुरिति पूर्वेण संबन्धः ॥ २ ॥

स ह संपादयांचकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

स ह तान्दृष्ट्वैव तेषामागमनप्रयोजनं बुद्ध्वा संपादयांचकार । कथम् । प्रक्ष्यन्ति मां वैश्वानरमिमे महाशाला महाश्रोत्रियास्तेभ्योऽहं न सर्वमिव पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे । अतो हन्ताहमिदानीमन्यमेषामभ्यनुशासानि वक्ष्याम्युपदेष्टारमिति ॥ ३ ॥

॥ ३ ॥

---

१ क. °रयोः सं° । २ क. ख. ग. घ. ङ. च. ट ठ. ड. ढ. ण. °तो हे भ° । ३ क ग. घ. . च. ट. ढ. °समुस्तं गत° । ठ. ण. °समुस्तं हं गत° । ४ क. ग. च. ट. ठ. ड. ढ. °वन्तः । आरुणिं °स ।

तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्र-
तीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्याग-
च्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥

एवं संपाद्य तान्होवाच । अश्वपतिर्वै नामतो भगवन्तोऽयं केकयस्यापत्यं कैकयः संप्रति सम्यगिममात्मानं वैश्वानरमध्येतीत्यादि समानम् ॥ ४ ॥
अश्वपतिरित्यादौ भगवन्त इति प्राचीनशालप्रभृतयः संबोध्यन्ते ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार
स ह प्रातः संजिहान उवाच न मे स्तेनो जन-
पदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न
स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽ-
हमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि
तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त
इति ॥ ५ ॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदे-
दात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि तमेव
नो ब्रूहीति ॥ ६ ॥

तान्होवाच प्रातर्वः प्रतिवक्ताऽस्मीति ते ह समि-
त्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवै-
तदुवाच ॥ ७ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

तेभ्यो ह राजा प्राप्तेभ्यः पृथक्पृथगर्हाण्यर्हणानि पुरोहितैर्भृत्यैश्च कार-
यांचकार कारितवान् । स हान्येद्युः[1] राजा प्रातः संजिहान उवाच विनये-
नोपगम्यैतद्धनं मत्त उपाददध्वमिति तैः प्रत्याख्यातो मयि दोषं पश्यन्ति
नूनं यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वान आत्मनः सद्वृत्ततां प्रति-

1 च. ठ. °ति । स तैः ।

पिपादयिषन्नाह। न मे मम जनपदे स्तेनः परस्वहर्ता विद्यते। न कदर्योऽदाता सति विभवे। न मद्यपो द्विजोत्तमः सन्। नानाहिताग्निः शतगुः। नाविद्वानधिकारानुरूपम्। न स्वैरी परदारेषु गन्ता। अत एव स्वैरिणी कुतो दुष्टचारिणी[1] न संभवतीत्यर्थः। तैश्च[2] न वयं धनेनार्थिन[3] इत्युक्त आहाल्पं मत्वैते धनं न[4] गृह्णन्तीति। यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तोऽस्मि[5]। तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै यथोक्तमृत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि। वसन्तु भगवन्तः पश्यन्तु च मम यागमित्युक्तास्ते होचुः। येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत्पुरुषस्तं हैवार्थं वदेत्। इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सताम्। वयं वैश्वानरज्ञानार्थिनः। आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि सम्यग्जानासि। अतस्तमेव नोऽस्मभ्यं ब्रूहीत्युक्तस्तान्होवाच। प्रातर्वो युष्मभ्यं प्रतिवक्ताऽस्मि प्रतिवाक्यं दातास्मीत्युक्तास्ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः। यत एवं महाशाला महाश्रोत्रियाः[6] ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः। तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यम्। तेभ्यश्चाददाद्विद्याम्[7]नुपनीयैवोपनयनमकृत्वैव[8] तान्। यथा योग्येभ्यो विद्यामदात्तथाऽन्येनापि विद्या दातव्येत्याख्यायिकार्थः[9]। एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन संबन्धः[10] ॥ ५ ॥ ६ ॥ ७ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

स हेत्यादि सोपस्कारं[11] व्याचष्टे—स हान्वेद्युरित्यादिना। यथोक्तं शास्त्रप्रसिद्धमिति यावत्। किं तर्हि भगवदागमनस्य[12] प्रयोजनं तदाह—वयं चेति। तन्ममापि नास्तीति शङ्कां निरस्यति—आत्मानमिति। शिष्यभावेनोपसन्नेभ्यो विद्या दातव्या न यथाकथंचिदिति राज्ञोऽभिप्रायः। ते हेत्यादिवाक्यस्य तात्पर्यं दर्शयति—यत इति। योगक्षेमार्थं राजानं प्रत्युपगमनमिष्टमेवेति मन्वानो विशिनष्टि—विद्यार्थिन इति। तथेत्यत्रातःशब्दो द्रष्टव्यः। उपनयनं पादयोर्निप(पा)तनम्। वक्ष्यमाणं

१ च. दुराचा°। २ ट. तैर्वयं धनेना°। ठ. तैर्न व°। ३ क. धनार्थि°। ४ ङ. न प्रतिगृ°। ५ ङ. °न्तोऽस्मीति त°। ६ ख. ग. ञ. ट. °या महाश्रो°। ७ क. °द्विद्यां विवक्षुरनु°। ८ ङ. °व तां यथा। ९ ख. ग. ङ. ञ. ड. ण. °रथा°। १० ङ. ड. ढ. °न्धः ॥ ११ ॥ औ°। ११ क. ग. ट. सोपस्करं। १२ क. °नम्र°।

वैश्वानरविज्ञानं तेनैतदित्यस्य संबन्ध इति यावत् । आख्यायिकातात्पर्यमुपसंहरति—यथेति । ॥ ९ ॥ ६ ॥ ७ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

(अथ पञ्चमाध्यायस्य द्वादशः खण्डः)।

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

स कथमुवाचेत्याह—औपमन्यव हे कमात्मानं वैश्वानरं त्वमुपास्स इति पप्रच्छ । नन्वयमन्याय आचार्यः शिष्यं पृच्छतीति । नैष दोषः । यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति न्यायदर्शनात् । अन्यत्राप्याचार्यस्याप्रतिमानवति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः, क्वैष तदाऽभूत्कुत एतदागादिति । दिवमेव द्युलोकमेव वैश्वानरमुपासे भगवो राजन्निति होवाच । एष वै सुतेजाः शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्मनोऽत्मनोऽवयवभूतत्वाद्यं त्वमात्मानमात्मैकदेशमुपास्से तस्मात्सुतेजसो वैश्वानरस्योपासनात्तव सुतमभिषुतं सोमरूपं कर्मणि प्रसुतं प्रकर्षेण च सुतमासुतं चाहर्गणादिषु तव कुले दृश्यतेऽतीव कर्मिणस्त्व(त्त)त्कुलीना इत्यर्थः ॥ १ ॥

शिष्यो हि प्रष्टाऽऽचार्यस्तु प्रतिवक्तेति न्यायेन शङ्कते—नन्विति । वाक्यशेषावष्टम्भेन दूषयति—नैष दोष इति । बृहदारण्यकश्रुत्यालोचनायामपि नैतदन्याय्यमित्याह—अन्यत्रापीति । आचार्यस्याजातशत्रोरिति संबन्धः । तस्याऽऽत्मत्वे हेतुमाह—आत्मन इति । एकाहादिरूपो ज्योतिष्टोमादिरहर्गणस्तत्र सुतं सोमरूपं लताद्रव्यमहीने प्रसुतं सत्रे त्वासुतमिति भेदः । तवेति पुनर्वचनमन्वयदर्शनार्थम् ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानर-

---

१ ङ. ढ. ण. °मपन्या° । २ क. ख. ग. घ. ङ. ञ. ट. ढ. °त्राप्यप्र° । ३ क. ख. ग. घ. ञ. ङ. ढ. ण. °त्मनोऽयमात्म° । ४ ख. ञ. ङ. ढ. फ. कर्म प्र° । ५ ङ. शिष्या हि प्रष्टार आचा° ।

मुग्रास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

अन्त्स्यन्नं दीप्ताग्निः सन्पश्यसि च पुत्रपौत्रादि प्रियमिष्टम् । अन्योऽप्यत्त्यन्नं पश्यति च प्रियं भवत्यस्य ब्रह्मवर्चसं कुले यः कश्चिदेतं यथोक्तमेवं वैश्वानरमुपास्ते । मूर्धा त्वात्मनो वैश्वानरस्यैव न समस्तो वैश्वानरः । अतः समस्तबुद्ध्या वैश्वानरस्योपासनान्मूर्धा शिरस्ते विपरीतग्राहिणो व्यपतिष्यद्विपतितमभविष्यत् । यद्यदि मां नाऽऽगमिष्यो नाऽऽगतोऽभविष्यः । साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

न केवलं प्राचीनशालनिष्ठमिदं फलं किंत्वन्यस्यापि भवतीत्याह—अन्योऽपीति । तर्हि यथोक्तवैश्वानरज्ञानादेव कृतकृत्यतेत्याशङ्क्याऽऽह—मूर्धा त्विति । अक्षरार्थमुक्त्वा विवक्षितार्थमाह—साध्विति ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

( अथ पञ्चमाध्यायस्य त्रयोदशः खण्डः ) ।

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

अथ होवाच सत्ययज्ञं पौलुषिं हे प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच । शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य सर्वरूपत्वाद्वा । सर्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा विश्वरूप आदित्य स्तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले ॥ १ ॥

१ ख. ङ. च. छ. ञ. 'त्यस्यापि मु' । २ क. 'सुतनि' । ३ ख. ग. ञ. ङ. 'र्शो वे वि' ।

अथ प्राचीनशाले तूष्णींभूते जिज्ञासमाने सत्यनन्तरमित्यर्थः । आदित्यस्य शुक्लत्वादिरूपत्वमष्टमे स्पष्टी भविष्यति । तस्य सर्वरूपत्वेन विश्वरूपत्वमुक्तमुपपादयति—सर्वाणीति ॥ १ ॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो यन्मां नाऽऽगमिष्य इति ॥२॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य त्रयोदशः खण्डः ॥१३॥

किंच त्वामनु प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथो दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः । अत्स्यन्नमित्यादि समानम् । चक्षुर्वैश्वानरस्य तु सविता । तस्य समस्तबुद्ध्योपासनादन्धोऽभविष्यश्चक्षुर्हीनोऽभविष्यो यन्मां नाऽऽगमिष्य इति पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य त्रयोदश खण्ड ॥१३॥

अत्स्यन्नमित्यादि चक्षुष्ट्वेतदित्यतः प्राक्तनमिति शेषः । चक्षुष्ट्वेतदित्यादिवाक्यं व्याचष्टे—चक्षुरित्यादिना । तत्रापि तात्पर्यं यथापूर्वं द्रष्टव्यमित्याह—पूर्ववदिति ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

(अथ पञ्चमाध्यायस्य चतुर्दशः खण्डः )।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

१ क. ख. ग. घ. च. ज. ञ. ट. ठ. त. थ. °विष्यद्यन्मां । २ ङ. च. ड. ण. °स्तद्वचोपा° । ३ घ. ङ. ड. ण. °ध्यश्चक्षु° । ४ क. ग. ब. झ. ञ. ट. ठ. त. थ. आययन्ति ।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यादि समानम् । पृथग्वर्त्मा नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैर्वर्तमानस्य सोऽयं पृथग्वर्त्मा वायुः । तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात्पृथङ्नानादिकास्त्वां बलयो वस्त्रान्नादिलक्षणा बलय आयन्त्यागच्छन्ति । पृथग्रथश्रेणयो रथपङ्क्तयोऽपि त्वामनुयन्ति ॥ १ ॥

सत्ययज्ञोपरमान्तरमित्यथशब्दार्थः । पृथगित्यतः प्राक्तनमादिपदेन गृहीतम् । पृथग्वर्त्मेति प्रतीकमादाय व्याचष्टे–नानेति । आभिमुख्येनाऽऽगच्छन्नावहः । ऊर्ध्वेन वहतीत्युद्वहः । तस्मात्त्वामित्यादि व्याचष्टे—तस्मादिति । नानादिका नानाविधासु दिक्षु भवा इत्येतत् ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

अत्स्यन्नमित्यादि समानम् । प्राणस्त्वेष आत्मन इति होवाच प्राणस्ते तवोदक्रमिष्यदुत्क्रान्तोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

अत्स्यन्नमित्यादि समानमित्यत्राऽऽदिपदमुपास्त इत्यन्तवाक्यसंग्रहार्थम् । उत्तरवाक्येऽप्यभिप्रायसाम्यं मत्वाऽऽह––प्राणस्त्विति ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

(अथ पञ्चमाध्यायस्य पञ्चदशः खण्डः) ।

---

अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष

---

१ क. ख. ग. घ. च. ञ. ट. ठ. ड. ण. °र्त्माऽऽत्मा ना° । २ ख. घ. ञ. ड. ढ. °द्विभेदै° । ३ क. ख. ग. च. ञ. ट. ठ. °र्त्माऽऽत्मा वा° । ४ क. °स्त्वां प्रति व° । ५ क. ग. घ. ङ. च. ट. ठ. ड. आयन्त्या° ।

वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से
तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अथ होवाच जनमित्यादि समानम् । एष वै बहुल आत्मा वैश्वानरः । बहुलत्वमाकाशस्य सर्वगतत्वाद्बहुलगुणोपासनाच्च । त्वं बहुलोऽसि प्रजया च पुत्रपौत्रादिलक्षणया धनेन च हिरण्यादिना ॥ १ ॥

इन्द्रद्युम्नोपरमानन्तरर्यमथशब्दार्थः । अत्राऽऽदिपदमेष इत्यस्मात्प्राक्तनवाक्यसंग्रहार्थम् । कथमाकाशस्य बहुलत्वमत आह—बहुलत्वमिति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य पञ्चदशः खण्डः॥१५॥

---

संदेहस्त्वेष संदेहो मध्यमं शरीरं वैश्वानरस्य । दिहेरुपचयार्थत्वान्मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्संदेहस्ते तव शरीरं व्यशीर्यच्छीर्णमभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥१५॥

---

कथं शरीरस्य मध्यमे भागे संशयवाची संदेहशब्दो वर्तते तत्राऽऽह—दिहेरिति । आकाशस्य सर्वगतत्वेन बहुलत्वाद्देहस्य च परिच्छिन्नत्वेन तदभावात्कथमाकाशं वैश्वानरस्य शरीरं स्यादित्याशङ्क्याऽऽह—मांसेति । तच्छरीरमिति संबन्धः ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

( अथ पञ्चमाध्यायस्य षोडशः खण्डः )।

---

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति

---

१ ख. ङ. ण. °ना पशुभिरश्वाजादिभिः सं । ञ. °ना पशुभिरश्वादिभिः सं° । ड. °ना पशुभिश्च गोश्वादिभिः सं° । २ क. च. °ध्यमश° । ३ ख. छ. ञ. ण. °रम° । ४ ख. छ. ञ. °स्य प° ।

होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमु-
पास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥ १ ॥

अथ होवाच बुडिलमाश्वतराश्विमित्यादि समानम् । एष वै रयिरात्मा वैश्वानरो धनरूपः । अद्भ्योऽन्नं ततो धनमिति । तस्माद्रयिमान्धनवांस्त्वं पुष्टिमांश्च शरीरेण पुष्टेश्चान्ननिमित्तत्वात् ॥ १ ॥

जनस्योपरमानन्तर(र्य)मथशब्दार्थः । कथमबात्मको वैश्वानरो रयिरिति धनेन निर्दिश्यते तत्राऽऽह—अद्भ्य इति । आयुर्वै घृतमितिवत्कार्यवाचकेन कारणं लक्ष्यत इत्यर्थः । तस्माद्यथोक्तवैश्वानरोपासनादित्येतत् । धनरूपवैश्वानरोपासनाद्धनवानित्येव वक्तव्ये कथं पुष्टिमानित्यधिकावापस्तत्राऽऽह—पुष्टेश्चेति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भव-
त्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानर-
मुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्ति-
स्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य षोडशः खण्डः ॥१६॥

---

बस्तिस्त्वेष आत्मनो वैश्वानरस्य बस्तिर्मूत्रसंग्रहस्थानं बस्तिस्ते व्यभेत्स्य-द्भिन्नोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य षोडशः खण्डः ॥१६॥

---

मूत्राशयो धनुर्वक्रो बस्तिरित्यभिधीयत इत्याशयेनाऽऽह—बस्तिरिति ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

( अथ पञ्चमाध्यायस्य सप्तदशः खण्डः )।

---

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मा-
नमुपास्स इति पृथिवीमेव भगवो राज-

---

१ घ. ठ. °न्नहेतुत्वा° । २ क. ख. ग. घ. ङ. च. ठ. ड. ण. °त् । वस्ति° । ३ ख. ग. घ. ङ. झ. ठ. ण. त. थ. °स्ते वस्ति° । ४ ख. ग. घ. ङ. ज. झ. ठ. त. थ. °च वस्ति° । ५ ख. ग. घ. ङ. च. ट. ठ. ड. ण. °स्य वस्ति° । ६ ख. ञ. ठ. ड. ढ. ण. संहारस्था° । ७ ख. ग. घ. ङ. ञ. ठ. ण. °नं वस्ति° । ८ ख. ग. छ. ञ. ण. °क्रो वस्ति° । ९ ख. छ. ण. °ह । बस्ति° ।

न्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

अथ होवाचोद्दालकमित्यादि समानम् । पृथिवीमेव भगवो राजन्निति होवाच । एष वै प्रतिष्ठा पादौ वैश्वानरस्य । पादौ ते व्यम्लास्येतां विम्लानावभविष्यतां श्लथीभूतौ यन्मां नाऽऽगमिष्य इति ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य सप्तदशः खण्डः ॥१७॥

---

प्राचीनशालप्रभृतिषु पञ्चसु मौनमातिष्ठमानेष्वनन्तरमित्यथशब्दार्थः ॥ १ ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

—○*○—

( अथ पञ्चमाध्यायस्याष्टादशः खण्डः ) ।

---

तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

तान्यथोक्तवैश्वानरदर्शनवतो होवाच । एते यूयं वै खल्वित्यनर्थकौ । यूयं पृथगिवापृथक्सन्तमिममेकं वैश्वानरमात्मानं विद्वांसोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्येत्येतद्धस्तिदर्शन इव जात्यन्धाः । यस्त्वेतमेवं यथोक्तावयवैर्मूर्धादिभिः[3]

१ क. °तां शिथिलीभू° । २ ख; ञ. °द्ध्येत्यर्थः । हस्ति° । ३ क. ग. घ. च. ट. ठ. ड. °दिभिर्वि° ।

पृथिवीपादान्तैर्विशिष्टमेकं[1] प्रादेशमात्रं प्रादेशैर्[2]मूर्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम् । मुखादिषु वा करणेष्वं[3]तृत्वेन मीयत इति[4] प्रादेशमात्रः । द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा[5] प्रादेशमात्रः । प्रकर्षेण शास्त्रेणाऽऽदिश्यन्त इति प्रादेशा द्युलोकादय एवं[6] तावत्परिमाणः प्रादेशमात्रः । शाखान्तरे तु मूर्धादि[7]श्चिबुक[8]प्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति । इह तु न तथाऽभिप्रेतः[9] । तस्य ह वा एतस्याऽऽत्मन इत्याद्युपसंहारात् । प्रत्यगात्मतयाऽभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं सर्वात्मैष ईश्वरो वैश्वानरो विश्वो[10] नर एव वा[11] सर्वात्मत्वात्[12] । विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरस्तमेवमुपास्ते यः सोऽदन्नाद्यी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति वैश्वानरवित्सर्वात्मा सन्नन्नमत्ति । न यथा[13]ऽज्ञः पिण्डमात्राभिमानिः[14] सन्नित्यर्थः ॥ १ ॥

उद्दालकान्तेषु विद्यार्थिषूपसन्नेषु सामस्त्येन वैश्वानरविद्यां वक्तुकामस्तेषां मिथ्याज्ञानमनुवदति—तानित्यादिना । अनर्थकाविवानर्थकौ निपातौ न त्वनर्थकावेव । तेषां मिथ्याज्ञानित्वप्रसिद्धिस्मारकत्वात् । यूयमित्यन्वयार्थं प्रागुक्तमपि पाठक्रमेण पुनरनूद्य पृथगिव विद्वांस इति संबन्धः । यथा जात्यन्धा हस्तिदर्शने भिन्नदृष्टयो भवन्ति तथा यूयं वैश्वानरमात्मानमेकमपि सर्वात्मकं सन्तं भिन्नमिव विद्वांसः परिच्छिन्नात्मरूपेणाऽऽत्मानं बुद्धवन्तः । तथा च मिथ्यादर्शिनो यूयं प्रागेव प्रत्यन्नाया न्मामागतवन्तः साधु कृतवन्त इत्यर्थः । प्रधानविद्यां वक्तुं पातनिकां कृत्वा तामिदानीमुपदिशति—यस्त्वित्यादिना । एतमेवंभूतं यस्तूपास्ते स सर्वेष्वन्नमत्तीति संबन्धः । एवंशब्दार्थमाह—यथोक्तेति । एकं समस्तं त्रैलोक्यात्मकमिति यावत् । प्रादेशमात्रमित्येतद्विभजते—प्रादेशैरि[15]ति । यथोक्तैराधिदैविकैरवयवैरध्यात्मं प्रत्यगात्मन्येवायं मीयत इति व्युत्पत्त्या प्रादेशमात्रस्तमिति यावत् । प्रकारान्तरेण व्याचष्टे—

---

१ ख. ग. घ. च. ञ. ट. ठ. ण. °त्रं प्रदे° । २ ख. ञ. ड. ढ. ण. °मात्रो मु° । ३ क. ख. ग. ञ. ट. °ष्वकर्तृत्वे° । ४ ख. घ. ञ. ण. °ति प्रदे° । ५ ठ. वा प्रदे° । ६ ठ. ड. ढ. एता° । ७ ख. ग. घ. ङ. ञ. ण. °दिचिबु° । ८ ख. ञ. ड. ढ. ण. °तिष्ठित इ° । ९ ठ. प्रेतम् । त° । १० ङ. ठ. विश्वान° । ११ च. ठ. वा विश्वात्म° । १२ ङ. ण. °त्मकत्वा° । १३ ङ. °थाऽन्यः पि° । ढ. ण. °थाऽन्योऽज्ञः । १४ च. °मानी स° । १५ ख. छ. ञ. ण. °ते । प्रदे° ।

मुखादिषु वेति । तेषु हि प्रदेशोऽन्नपर्यन्तृत्वेन साक्षितया मीयत इति व्युत्पत्त्या तथोच्यत इत्यर्थः । विधान्तरेण व्याचष्टे—द्युलोकादीति । अर्थान्तरमाह—प्रकर्षेणेति । आमनन्ति चैनमस्मिन्निति न्यायेन पक्षान्तरमाह—शाखान्तरे त्विति । अस्तु तर्हि जाबालश्रुत्यनुसारेण मूर्धानमारभ्याधरफलकपर्यन्ते देहावयवे संपादितो वैश्वानरः प्रादेशमात्र इति नेत्याह—इह त्विति । सर्वात्मत्वेन वैश्वानरस्योपसंहार-दर्शनान्नात्र जाबालश्रुतिरनुसर्तव्येत्यर्थः । विशेषणान्तरं व्याचष्टे—प्रत्यगात्मतयेति । सर्वेश्वरत्वं सर्वात्मत्वं सर्वप्रत्यक्त्वं वा हेतूकृत्य वैश्वानरशब्दमनेकधा व्याकरोति—विश्वानित्यादिना । ईश्वरो वैश्वानर इत्यत्र वैश्वानरपदमुभयत्र संबध्यते । स वैश्वा-नरविदन्नमदन्सर्वेषु लोकादिषु स्थित्वाऽन्नमत्तीति संबन्धः । कथमात्मशब्देन शरी-रादयो गृह्यन्ते तत्राऽऽह—तेषु हीति । सर्वेषु लोकेष्वित्यादिवाक्यस्य तात्पर्यार्थं दर्शयति—वैश्वानरविदिति ॥ १ ॥

तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुते-जाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहु[3]लो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदि-र्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्याष्टादशः खण्डः ॥१८॥

===

कस्मादेवम् । यस्मात्तस्य ह वै प्रकृतस्यैवैतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ । अथवा विध्यर्थमेतद्वचनमेवमुपास्य इति । अथेदानीं वैश्वा-नरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह—एतस्य वैश्वानरस्य भोक्तुरुर एव वेदिराकारसामान्यात् । लोमानि बर्हिर्वेद्यामिवोरसि लोमान्यास्ती-र्णानि न दृश्यन्ते । हृदयं गार्हपत्यो हृदयाद्धि मनः प्रणीतमिवानन्तरी भव-त्यतोऽन्वाहार्यपचनोऽग्निर्मनः । आस्यं मुखमाहवनीय इवाऽऽहवनीयो हूय-तेऽस्मिन्नन्नमिति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्याष्टादशः खण्डः ॥१८॥

---

वैश्वानरोपासकः सर्वात्मा सन्नन्नमत्तीत्येवं कस्माद्धेतोर्निश्चितमित्याशङ्कामनूद्य हेतुप्रदर्शनपरत्वेनो[6]त्तरत्वेनोत्तरं वाक्यमुपादत्ते—कस्मादित्यादिना । वैश्वानरस्य

---

१ क. ग. ट. °प्रकर्तृत्वे° । २ क. ग. ट. °ल्प° । ३ ख. घ. ङ. ज. झ. ठ. त. थ. °लो ब-स्ति° । ४ झ. ट. °दा उर । ५ ख. ग. घ. ङ. ठ. ड. ढ. °लो बस्ति° । ६ क. ट. °मोत्तरं° ।

सर्वात्मत्वात्तदुपासकस्यापि तदात्मतया सर्वात्मत्वादसौ सर्वात्मा भूत्वा सर्वत्रान्नमत्तीति युक्तमित्यर्थः। तस्येत्यादिवाक्यस्य तात्पर्यान्तरमाह—अथेति। प्रधानविद्यामुक्त्वा तदङ्गप्राणाग्निहोत्रं दर्शयितुकामो भूमिकां करोति—अथेति। संपादयितुमिच्छन्नादौ तदङ्गान्यश्वपतिराहेत्यर्थः। वेदिरिति स्थण्डिलमात्रं गृह्यते। अग्निहोत्रे तावन्मात्रस्योपयुक्तत्वादितरस्य दर्शपूर्णमासाद्यङ्गत्वात्। वेद्यामास्तीर्यन्ते ये दर्भा[स्ते] बर्हिःशब्देनोच्यन्ते। हृदयस्य गार्हपत्यत्वं मनःप्रणयनहेतुत्वात्। प्रणीतमुत्पन्नमिवेत्यर्थः। आहवनीयसादृश्यं च मुखस्य दर्शयति—आहवनीय इति॥ २॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्याष्टादशः खण्डः॥ १८॥

---

( अथ पञ्चमाध्यायस्यैकोनविंशः खण्डः )।

---

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति॥ १॥**

तत्तत्रैवं सति यद्भक्तं भोजनकाल आगच्छेद्भोजनार्थं[1] तद्धोमीयं तद्धोतव्यमग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नाग्निहोत्राङ्गेतिकर्तव्यताप्राप्तिरिह स भोक्ता यां प्रथमामाहुतिं जुहुयात्तां कथं जुहुयादित्याह—प्राणाय स्वाहेत्यनेन मन्त्रेणाऽऽहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः। तेन प्राणस्तृप्यति॥ १॥

एवं सतीत्युक्तन्यायेनाग्निहोत्रे संपादिते सतीत्यर्थः। संपादितस्याग्निहोत्रत्वस्य सामान्यादग्न्युद्धरणादीनि तदङ्गान्यत्र भवेयुरित्याशङ्क्य तद्बुद्धिमात्रस्य विवक्षितत्वान्मैवमित्याह—अग्निहोत्रेति। इहेति वैश्वानरविदो भोजनमुच्यते। प्रकृतहोमगतावान्तरविभागमाह—स भोक्तेति। कथमिति मन्त्रो वा द्रव्यपरिमाणं वा फलं वा पृच्छ्यते तत्र प्रथमं प्रत्याह—प्राणायेति। यदि द्वितीयस्तत्राऽऽह—आहुतीति। अवदानस्य प्रमाणं परिमाणं कर्मिणां प्रमाणं प्रसिद्धं तेन परिमितमिति यावत्। तृतीयश्चेत्तत्राऽऽह—तेनेति॥ १॥

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चाऽऽदित्यश्चाधितिष्ठत-**

---

१ ग. घ. ङ. छ. ट. ठ. ड. 'र्थं तद्धोमार्थं होमी'।

स्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्यैकोनविंशः खण्डः॥१९॥

---

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुरादित्यो द्यौश्चेत्यादि तृप्यति यच्चान्यद् द्यौश्चाऽऽदित्यश्च स्वामित्वेनाधिष्ठितस्तच्च तृप्यति तस्य तृप्तिमनु स्वयं भुञ्जानस्तृप्यत्येवं प्रत्यक्षम् । किंच प्रजादिभिश्च । तेजः शरीरस्था दीप्तिरुज्ज्वलत्वं प्रागल्भ्यं वा, ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्यैकोनविंशः खण्डः ॥१९॥

भुञ्जानस्य तृप्तौ प्रत्यक्षं प्रमाणं प्राणादेस्तृप्तौ शास्त्रमिति विभागमभिप्रेत्याऽऽह — प्रत्यक्षमिति । प्रजादिभिश्च भोक्ता तृप्यतीति संबन्धः ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥

( अथ पञ्चमाध्यायस्य विंशः खण्डः ) ।

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य विंशः खण्डः ॥२०॥

( अथ पञ्चमाध्यायस्यैकविंशः खण्डः ) ।

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥

---

१ ख. च. ञ. ठ. ड. ण. °त्येव प्र° । २ ग. घ. ङ. च. ठ. ढ. °रगता दी° ।

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्नि-स्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्यैकविंशः खण्डः॥२१॥

( अथ पञ्चमाध्यायस्य द्वाविंशः खण्डः )।

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य द्वाविंशः खण्डः॥२२॥

( अथ पञ्चमाध्यायस्य त्रयोविंशः खण्डः )

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति[1] त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चाधि-

१ क. ख. ग. घ. ङ. ज. झ. ञ. ट. त. °ति का°।

तिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

अथ यां द्वितीयां तृतीयां चतुर्थीं पञ्चमीमिति समानम् ॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य विंशः खण्डः ॥ २० ॥

॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

॥ १ ॥ २ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्ये पञ्चमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

॥ १ ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां चतुर्थाध्यायस्य विंशः खण्डः ॥ २० ॥

॥ १ ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

॥ १ ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य द्वाविंश खण्डः ॥ २२ ॥

॥ १ ॥ २ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायां पञ्चमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

( अथ पञ्चमाध्यायस्य चतुर्विंशः खण्डः )

स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥

स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान्सन्नग्निहोत्रं प्रसिद्धं जुहोति यथाऽङ्गारानाहुतियोग्यानपोह्यानाहुतिस्थाने भस्मनि जुहुयात्तादृक्तत्तुल्यं तस्य तदग्निहोत्रहवनं स्याद्वैश्वानरविदोऽग्निहोत्रमपेक्ष्येति[२] प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते ॥ १ ॥

---

१ च. ट. नमन्यत् ॥ २० ॥ २ ञ. ठ. ङ. ढ. ण. °ते । अत° ।

प्रसिद्धाग्निहोत्रनिन्दाद्वारेण वैश्वानरविदो यथोक्तमग्निहोत्रमवश्यकर्तव्यतायै स्तौति— स यः कश्चिदित्यादिना ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

अतश्चैतद्विशिष्टमग्निहोत्रम् । कथम् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य यथोक्तवैश्वानरविज्ञानवतः सर्वेषु लोकेष्वित्याद्युक्तार्थम् । हुतमन्नमत्तीत्यनयोरेकार्थत्वात् ॥ २ ॥

प्राणाग्निहोत्रस्य वैशिष्ट्ये हेत्वन्तरमतःशब्दोपात्तं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । नैयमिकाग्निहोत्रनिन्दाद्वारा प्राणाग्निहोत्रस्तुत्यनन्तरं विधान्तरेण तस्यैव निरवद्यता कीर्त्यत इत्यथशब्दार्थः । एतदिति वैश्वानरदर्शनमुक्तम् । एवमिति । वैश्वानरस्योक्तसर्वात्मत्वादिप्रकारेणेत्यर्थः । अग्निहोत्रमिति सांपादिकमग्निहोत्रं गृह्यते । कथमिदमुक्तार्थं सर्वेषु लोकादिष्वन्नमत्तीति वाक्यं व्याख्यातं तस्य सर्वेषु लोकादिषु हुतं भवतीत्यन्यादृशमिदं वाक्यं तत्राऽऽह—हुतमिति ॥ २ ॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

किंच तद्यथेषीकायास्तूलम्[1]ग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रमेवं हास्य विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः सर्वे निरवशिष्टाः पाप्मानो धर्माधर्माख्या अनेकजन्मसंचिता इह च प्राग्ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च प्रदूयन्ते प्रदह्येरन्वर्तमानशरीरारम्भकपाप्मवर्जं, लक्ष्यं प्रति मुक्तेषुवत्प्रवृत्तफलत्वात्तस्य न दाहः । य एतदेवं विद्वानग्निहोत्रं जुहोति भुङ्क्ते ॥ ३ ॥

इतश्च वैश्वानरविद्यावतोऽग्निहोत्रं विशिष्टमिति वक्तुं वैश्वानरविद्यां स्तौति—किंचेति । तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्त इति यावत् । इषीकाया मुञ्जामध्यवर्तितृणस्येत्येतत् । सर्वशब्दात्प्रारब्धकर्मणोऽपि दाहमाशङ्क्याऽऽह—वर्तमानेति ।

१ ण. °रमिबः । २ ख. छ. ञ. ण. °त्मकत्वा° । ३ ञ. ठ. °मग्नौ । ४ ख. ग. घ. ङ. ञ. ट. ड. ढ. °न्ते त° ।

वैश्वानरविद्याया महाफलत्वे सिद्धे तद्वतोऽग्निहोत्रं विशिष्टमिति तत्कर्तुः सर्वदोषास्पर्शित्वमित्याशयेनाऽऽह—य एतदिति ॥ ३ ॥

तस्माद् हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥

स यद्यपि चण्डालायोच्छिष्टानर्हायोच्छिष्टं प्रयच्छेदुच्छिष्टं दद्यात्प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्यादात्मनि हैवास्य चण्डालदेहस्थे वैश्वानरे तद्धुतं स्यान्नाधर्मनिमित्तमिति विद्यामेव स्तौति । तदेतस्मिन्स्तुत्यर्थे श्लोको मन्त्रोऽप्येष भवति ॥ ४ ॥

विद्यामेव विद्यास्तुतिद्वाराऽग्निहोत्रमिति यावत् । स्तुत्यर्थेऽग्निहोत्रस्य स्तुतिरूपो योऽर्थस्तस्मिन्नित्येतत् ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासत एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य चतुर्विंशः खण्डः॥२४॥

इति च्छान्दोग्योपनिषद्ब्राह्मणे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते कदा नो माताऽन्नं प्रयच्छतीत्येवं सर्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोक्ष्यत इति । जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ ५ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

—:०-०-०-०:—

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ छान्दोग्योपनिषद्विवरणे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

रुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः[1] स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥

यथाऽयं दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यया संसारावस्थायां[2] शरीरसाम्यमापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्य इत्येवंप्रकारं[3] प्रजापतिनेव[4] मघवान्यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्मा तत्त्वमसीति प्रतिबोधितः सन्स एव संप्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः समुत्थाय देहादिवैलक्षण्यमात्मनो रूपमवगम्य देहात्मभावनां हित्वेत्येतत्। स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात्।

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति। वाय्वादीनामित्यस्य पुरस्तात्तथेत्यध्याहर्तव्यम्। तत्राऽऽदिशब्देनाभ्रविद्युत्स्तनयित्नवो गृह्यन्ते। आकाशादीत्यादिपदमभ्रादिकारणसंग्रहार्थम्। शरीरसाम्यमेव विशिनष्टि—अहमिति। प्रतिबोधने दृष्टान्तमाह—प्रजापतिनेति। यथोक्तेन क्रमेण पर्यायचतुष्टयोपदिष्टप्रकारेणेति यावत्। मघवान्प्रतिबोधित इति संबन्धः। दार्ष्टान्तिके प्रतिबोधनप्रकारं दर्शयति—नासीति। शरीराद्विदुषः समुत्थाने दृष्टान्तमाह—आकाशादिवेति। समुत्थानं विभजते—देहादीति। पुनरुक्तिं परिहरति—इति व्याख्यातमिति।

स येन स्वेन रूपेण संप्रसादोऽभिनिष्पद्यते प्राक्प्रतिबोधात्तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते[5]। एवं च स उत्तमपुरुष[6] उत्तमश्चासौ[7] पुरुषश्चेत्युत्तमपुरुषः[8] स एवोत्तमपुरुषोऽक्षिस्वप्नपुरुषौ[9][10] व्यक्ताव्यक्तश्च[11] सुषुप्तः समस्तः संप्रसन्नोऽशरीरश्च स्वेन रूपेणेति[12]। एषापेष स्वेन रूपेणावस्थितः क्षराक्षरौ[13] व्याकृताव्याकृतावपेक्ष्योत्तमपुरुषः[14] कृतनिर्वचनो ह्ययं गीतासु स संप्रसादः स्वेन

१ क. °त्तमः पूरु° । त. °त्तमपु° । घ. ङ. ज. ञ. °त्तमः पु° । २ क. ग. ङ ड. ढ. °यां स श° । ३ ख. ज. ण. °वं प्रजा° । ४ ख. ग. घ. च. ञ. ट. ड. °तिनैव । ५ क. ग. घ. ङ. च. ट ठ. ड. ढ. °ते । अत ए° । ६ क. °मपूरु° । ७ क. °सौ पूरु° । ८ क. °मपूरु° । ९ ठ. °ष उत्तमः पुरुषाद्वोत्त° । १० क. °मपूरु° । ११ क. ञ. ढ. °क्ताव्य° । १२ क. ग. ट. °मेव स्वे° । १३ ढ. °रौ व्यक्ताव्यक्तौ व्या° । १४ क. ठ. °मपूरु° ।

रूपेण तत्र स्वात्मनि स्वस्थतया सर्वात्मभूतः पर्येति क्वचिदिन्द्राद्यात्मना जक्षद्भक्षयन्वा भक्ष्य नुच्चावचानीप्सितान्क्वचिन्मनोमात्रैः संकल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन्क्रीडादिभी रममाणश्च मनसैव नोपजनं स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजननमात्मभावेन वाऽऽत्मसामीप्येन जायत इत्युपजनमिदं शरीरं तन्न स्मरन् । तत्स्मरणे हि दुःखमेव स्यात् । दुःखात्मकत्वात्तस्य ।

उत्तरवाक्यस्थं सशब्दं व्याचष्टे—स येनेति । स उत्तमपुरुष इति संबन्धः । संप्रसादस्य स्वेन रूपेणाभिनिष्पत्तिं दृष्टान्तेन स्पष्टयति—प्रागित्यादिना । उक्तदृष्टान्तानुसारेणाविद्यादशायां शरीरात्मत्वमापन्नो जीवो विद्यया प्रकाशितब्रह्मसतत्त्वः स्वेन रूपेणाभिनिष्पन्नो भवतीति दार्ष्टान्तिकमाह—एवं चेति । पुरुषस्योत्तमविशेषणं पुरुषान्तरव्यवच्छेदार्थमित्यभिप्रेत्य पुरुभेदं दर्शयति—अक्षीति । इति चत्वारः पुरुषा इति शेषः । तत्र पूर्वेषां त्रयाणां व्यवच्छेद्यत्वं तुरीयस्य तूत्तमपुरुषत्वमित्याह—एषामिति । यथोक्तोत्तमपुरुषे भगवत्संमतिं संगिरते—क्षेतेति ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इति हि स भगवानूचिवान् । स तत्रेत्यादि व्याचष्टे—स संप्रसाद इति । क्वचिदिति स्वर्गलोकोक्तिः । क्वचिन्मनोमात्रैरित्यत्र क्वचिदिति ब्रह्मलोको गृह्यते । नोपजनमिति प्रतीकं गृहीत्वा व्याकरोति—स्त्रीपुंसयोरिति । तन्न स्मरन्पर्येतीति संबन्धः । यथोक्तदेहस्मृतौ काऽनुपपत्तिरित्याशङ्क्याऽऽह—तत्स्मरणे हीति ।

नन्वनुभूतं चेन्न स्मरेदसर्वज्ञत्वं मुक्तस्य । नैष दोषः । येन मिथ्याज्ञानादिना जनितं तच्च मिथ्याज्ञानादि विद्ययोच्छेदितमतस्तन्नानुभूतमेवेति न तदस्मरणे सर्वज्ञत्वहानिः । न ह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्यपगमेऽपि स्मर्तव्यं स्यात्तथेहापि संसारिभिरविद्यादोषवद्भिरनुभूयते

१ ठ. ड. ण °या सर्वात्मतया स° । २ ग. घ. ङ. च. ट. ठ. ड. ण. °मात्रेण सं° । ३ क. ट °नं स्मरन्स्त्री° । ४ क. °मरत्रवि° । ५ क. ख. ञ. क्षरेति । ६ ख. छ. ञ. ण. °ति स । ७ ण. मात्रेणेत्य° । ८ ख. ग. ञ. ढ. तन्मिथ्या° ।

तत्सर्वात्मानमशरीरं न स्पृशति। अविद्यानिमित्ताभावात्। ये तु[1] च्छिन्नदोषैर्मृदितकषायैर्मानसाः सत्याः कामा अनृतापिधाना अनुभूयन्ते विद्याभिव्यङ्ग्यत्वात्त एव मुक्तेन सर्वात्मभूतेन संबध्यन्त इत्यात्मज्ञानस्तुतये निर्दिश्यन्तेऽतः साध्वेतद्विशिनष्टि—य एते ब्रह्मलोक इति। यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हि ते लोके भवन्तीति सर्वात्मत्वाद्ब्रह्मण उच्यन्ते[2]।

विदुषो मुक्तस्यानुभूतदेहास्मरणे दूषणमाशङ्कते—नन्विति। असर्वज्ञत्वदोषं निराकरोति—नैष दोष इति। अनुभूतार्थस्मृतौ हि सर्वज्ञ इति। न च शरीराद्यनुभूतं[3] तस्याविद्याकामकर्ममूलत्वाज्ज्ञानमात्रत्वात्तस्य च सकार्यस्य ज्ञानोदयमात्रेण[4] नष्टत्वात्प्रागपि शरीरादेरनुभवविपरीतवर्तित्वानुपपत्तेरित्यर्थः। शरीरादि पूर्वं सम्यग्ज्ञानेनाविषयीकृतमपि[6] भ्रान्त्याऽनुभूतमेवेति विदुषामपि स्मर्तव्यमिति चेन्नेत्याह—न हीति। मुक्ते पुरुषे शरीरादयो न संबध्यन्ते चेत्कथं तर्हि तत्र कामाः संबध्येरन्नित्याशङ्क्याऽऽह—ये त्विति। किमिति सर्वैरेते कामा नानुभूयेरन्नित्याशङ्क्याऽऽह—अनृतापिधाना इति। इतश्च विदुषामेव तदभिव्यक्तिरित्याह—विद्येति। किमिति निर्गुणविद्याप्रकरणे विदुषि सत्यकामसंबन्धवचनं तत्राऽऽह—इत्यात्मज्ञानेति। आत्मविद्यास्तुत्यर्थं विदुषि कामसंबन्धवचनम्। मनसैतान्कामान्पश्यन्नित्यत्र विशेषश्रवणमपि युक्तमित्याह—अत इति। इन्द्रियादिषु भवतां कामानां कुतो ब्रह्मलोकभावित्वमित्याशङ्क्याऽऽह—यत्रेति।

ननु कथमेकः सन्नान्यत्पश्यति नान्यच्छृणोति[5] नान्यद्विजानाति[8] स भूमा कामांश्च ब्राह्मलौकिकान्पश्यन्रमत इति च विरुद्धम्। यथैको यस्मिन्नेव क्षणे पश्यति स तस्मिन्नेव क्षणे न पश्यति चेति। नैष दोषः। श्रुत्यन्तरे परिहृतत्वात्। द्रष्टुर्दृष्टेरविपरिलोपात्पश्यन्नेव भवति। द्रष्टुरन्यत्वेन कामानामभावान्न पश्यति चेति। यद्यपि सुषुप्ते तदुक्तं मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः। केन कं पश्येदिति चोक्तमेव।

मनसैतान्कामानित्यादिवाक्यं स्तुत्यर्थमपि प्रधानवाक्यविरुद्धत्वात्त्याज्यमिति शङ्कते—नन्विति। वाक्ययोर्मिथो विरोधे दृष्टान्तमाह—यथेति। यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति बृहदारण्यकश्रुतिमाश्रित्य विरोधं धुनीते—नैष दोष इति। अथ यथोक्तं वाक्यं सुषुप्तमधिकृत्य प्रवृत्तं कथं मुक्तविषयतयोद्गा-

१ ख. ग. घ. च. ज. ट. ठ. ढ. ण. ये तु च्छि°। २ घ. ठ. ङ. उच्यते। ३ ग. ट. °र्ममलस्या°। ४ ग. ट. °ण ध्वस्तत्वा°। ५ ग. °परित°। ६ ख. छ. ञ. ण. °कृतं स°। ७ ख. ग. घ. ङ. च. ज. ढ. ठ. ण. °नातीति। ८ ग. ङ. च. ड. ढ. °ति भूमनः का°। ९ घ. ङ. °ति वि°

हृतमत आह—यद्यपीति । सु[1]प्तस्य मोक्षदृष्टान्तत्वात्तद्गतस्य च दार्ष्टान्तिकेऽनुगमा- द्युक्तं सुषुप्ते तत्संबन्धो मुक्ते सिध्यतीत्यर्थः । किंच मुक्तमेवाधिकृत्य यत्र त्वस्य सर्वमात्मैवाभूदित्यादि तत्रैवोक्तमित्याह—केनेति ।

अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः से[2]न्कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना । तत्र तथाऽसावक्षिणि साक्षाद्दृश्यते तद्वक्तव्यमितीद- मारभ्यते । तत्र को हेतुरक्षिणि दर्शन इत्याह—स दृष्टान्तो यथा प्रयो- ग्यः प्रयोग्यपरो वा सशब्दः । प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा । यथा लोक आचरत्यनेनेत्याचरणो रथोऽनो वा तस्मिन्नाचरणे युक्तस्तदा- कर्षणाय, एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिरिन्द्रियमनोबुद्धि- संयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितात्मा युक्तः स्वकर्मफलोप- भोगनिमित्तं नियुक्तः । कस्मिन्न्वहमु[ त्क्रान्त उ ]त्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति । ईश्वरेण राज्ञेव सर्वाधिकारी दर्शन- श्रवणचेष्टाव्यापारेऽधिकृतः । तस्यैव तु मात्रैकदेशश्चक्षुरिन्द्रियं रूपोपलब्धि- द्वारभूतम् ॥ ३ ॥

फलार्थवादस्याक्षिवाक्यस्य च मिथो विरोधं शङ्कते—अशरीरेति । दृश्यत इत्यस्य पदस्य चाक्षुषदर्शने रूढत्वादशरीरस्य तदयोग्यत्वादशरीरात्मोक्तिर्दृश्यत इतिश्रुति- विरुद्धेत्यर्थः । आत्मत्वामृतत्वादिब्रह्मविषयानेकश्रुतिलिङ्गविरोधाद्दृश्यत इत्येकस्याः श्रुतेर्ज्ञानमात्रवि[3]षयनिरोधोऽस्तीत्यभिप्रेत्याना[4]न्तरवाक्यमुत्थापयति—तत्रेति । चाक्षुष- दर्शनाविषयत्वे सति चक्षुषो दर्शने को हेतुरित्यपेक्षायां लिङ्गहेतुकं तावद्दर्शनं संभव- तीति मत्वा दृष्टान्तमाह श्रुतिः । स दृष्टान्तो यथा भवति तथोच्यत इत्याह—तत्रेति । तमेव दृष्टान्तमनूद्य व्याचष्टे—यथेत्यादिना । अध्याहारराहित्यसिद्ध्यर्थं[4] पक्षान्त- रमाह—प्रयोग्येति । एवमित्यनेन द्वितीयो यथाशब्दः संबध्यते । शरीरस्य रथस्थानी- यत्वं शरीरं रथमेव त्विति श्रुत्यन्तरादनुसन्तव्यम्[5] । अस्मिन्युक्तः स रथस्थानीय ईश्वरेण स्वकर्मफलोपभोगनिमित्तं प्राणो रथित्वेन नियुक्त इति संबन्धः । घ्राणप्राणं व्यावर्तयति— पञ्चवृत्तिरिति । "बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि[6] हया- नाहुः" इतिश्रुत्यन्तरमाश्रित्याऽऽह—इन्द्रियेति । आत्मानं रथिनं विद्धीतिश्रुतिविरुद्धं प्राणस्य रथित्वमित्याशङ्क्य त[7]स्योपाधित्वेस्तदभेदाङ्गीकारान्मैवमित्याह—प्रज्ञात्मेति ।

---

१ क. सुप्तस° । २ क. घ. ङ. च. ञ. ड. ढ. स क्ता° । ३ क. ख. छ. ञ. ण. 'षयावान्तर- विरो° । ४ क. °न्तरं वा° । ५ क. ख. ञ. °म् । तस्मिन्युक्तशरीर इ° । ६ ख. छ. ञ. ढ. ण. °ति वि° । ७ क. ख. ञ. ण. तस्य तदुपा° ।

तस्याध्यात्मसंतानेशरीरद्वयविशिष्टत्वेन स्फुरितं स्वरूपं दर्शयति—विज्ञानेति । ईश्वरस्य यथोक्तप्राणोपाधिद्वारा भोक्तृत्वादिसंसारित्वमित्यत्र श्रुत्यन्तरं प्रमाणयति—कस्मिन्निति । प्रतिष्ठास्यामीतीक्षित्वा स प्राणमसृजतेत्यादिश्रुतिरिति शेषः । तथा च यथा राज्ञा सर्वाधिकारित्वेन सेनाध्यक्षः संधिविग्रहादौ नियुज्यते तथेश्वरेण सर्वचेष्टान्तराधिकृतः स्वकीयदर्शनादिव्यापारनिमित्तं नियुक्तो भवतीत्याह—राज्ञेति । प्राणः स्वविलक्षणेन चेतनेन नियुज्यते प्रयोज्यत्वादश्वादिवदित्यनुमानाद्देहसंहतात्प्राणादतिरिक्तोऽसंहतश्चेतनः सिध्यतीति समुदायार्थः । चक्षुरादिचेष्टा चेतननिमित्ता चेष्टात्वाद्रथादिचेष्टावदित्यनुमानान्तरं सूचयति—तस्यैवेति । प्रकृतप्राणविषयस्तच्छब्दः । मात्रेत्येतस्य व्याख्यानमेकदेश इति । प्राणसंवादे चक्षुरादीनां प्राणपारतन्त्र्यप्रतीतेस्तदेकदेशत्वं तेषामिति द्रष्टव्यम् ॥ ३ ॥

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदꣳ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रमनुविषण्णमनुषक्तमनुगतं तत्र स प्रकृतोऽशरीर आत्मा चाक्षुषश्चक्षुषि भव इति चाक्षुषस्तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं यस्य तद्देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थं सोऽत्र चक्षुषि दर्शनेन लिङ्गेन दृश्यते परोऽशरीरोऽसंहतः । अक्षिणि दृश्यत इति प्रजापतिनोक्तं सर्वेन्द्रियद्वारोपलक्षणार्थम् । सर्वविषयोपलब्धा हि स एवेति । स्फुटोपलब्धिहेतुत्वाच्चाक्षिणीति विशेषवचनं सर्वश्रुतिषु । अहमदर्शमिति तत्सत्यं भवतीति च श्रुतेः । अथापि योऽस्मिन्देहे वेद कथमिदं सुगन्धि दुर्गन्धि वा जिघ्राणीत्यस्य गन्धं विजानीयामिति स आत्मा तस्य गन्धाय गन्धविज्ञानाय घ्राणम् । अथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति

---

१ क. ख. छ. ञ. ण. °नद्व° । २ ग. ट. °कारी सं° । ३ क. ग. घ. ङ. झ. ञ. ट. ठ. त. थ. शृण्वानी° । ४ ढ. ण. °नुविष । ५ क. ग. ट. ठ. °त्मा चक्षुषि भवतीति चा° । ख. च. ड. ढ. °त्मा चक्षुषि भवति चा° । ६ कं. ख. ग. ङ. च. ञ. ट. ड. ण. °र्थं सो° । ठ. °र्थः सो° । ७ ख. ज. ढ. ण. °त्वच्चाक्षि° । ठ. °त्वादक्षि° । ८ ख. ञ. ठ. °ति श्रु° । ९ घ. ङ. ड. श्रुतिः ।

स आत्माऽभिव्यवहरणक्रियासिद्धये करणं वागिन्द्रियम् । अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

शरीराद्व्यतिरिक्तमात्मानं संभाव्य तस्यौपाधिकं द्रष्टृत्वमाचष्टे—अथेति । अतिरिक्तात्मसंभावनानन्तर्यमथशब्दार्थः । यत्र तत्रेतिसप्तमीभ्यां संसारदशोच्यते । अनुगतं चक्षुरिति संबन्धः । दर्शनाय चक्षुरित्यस्यार्थं समर्थयते—यस्येति । यस्य परस्य द्रष्टुरर्थे करणं चक्षुरिष्टं स परश्चक्षुषि लिङ्गेन दृश्यत इति संबन्धः । पारार्थ्ये चक्षुषो हेतुमाह— देहादिभिरिति । यत्संहतं तत्स्वविलक्षणशेषं दृष्टं यथा शयनासनादि तथा तदपि चक्षुर्देहादिभिः संहतत्वात्तस्य विलक्षणस्य शेषभूतं सोऽत्र दर्शनेन लिङ्गेन दृश्यते । विमतं साश्रयं धर्मत्वाद्रूपादिवदित्यनुमानादित्यर्थः । दृश्यत इत्यस्याविरुद्धार्थमुक्त्वाऽक्षिणीत्यस्य विवक्षितमर्थमाह—अक्षिणीति । यथाऽक्षिद्वारा रूपोपलब्धा परस्तथा तत्तदिन्द्रियद्वारा तत्तद्विषयोपलब्धा पर एवेति कृत्वा युक्तमिदमुपलक्षणमिति साधयति—सर्वविषयेति । सर्वेन्द्रियैरुपलब्धृत्वमविशिष्टं चेत्कथं तर्हि सर्वास्वपि श्रुतिषु चक्षुष्येवास्योपदिश्यते तत्राऽऽह—स्फुटेति । चक्षुषः स्फुटोपलब्धौ हेतुत्वे श्रुतिं संवादयति—अहमिति । यत्रादर्शमिति चक्षुषः प्रत्ययस्तद्वस्तु सत्यं स्फुटोपलम्भादिति द्वयोर्विवदमानयोर्दृष्टमित्यर्थः । य एषोऽक्षिणीत्यत्र सर्वेन्द्रियद्वारोपलब्धा विवक्षित इत्युक्तं व्यक्तीकरोति—अथापीति । चक्षुषि स्फुटोपलम्भेऽपीति यावत् । योऽस्मिन्देहे येन केनापीन्द्रियेण यं कंचिद्विषयं वेद स आत्मेति संबन्धः । उक्तमेवार्थमाकाङ्क्षाद्वारा स्फोरयति—कथमित्यादिना । जिघ्राणीति यो वेदेत्युक्तमेव संक्षिपति—अस्येति ॥ ४ ॥

अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य
दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैता-
न्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥

अथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियासंस्पृष्टं केवलं मन्वानीति वेद स आत्मा मननाय मनः । यो वेद स आत्मेत्येवं सर्वत्र प्रयोगाद्वेदनमस्य स्वरूपमित्यवगम्यते । यथा यः पुरस्तात्प्रकाशयति स आदित्यो यो दक्षिणतो यः पश्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य इत्युक्ते

१ क. ट. ठ. ड. ण शृण्वानी° । २ क ख. छ ञ. ण. °रर्थक° । ३ क. ख. छ. ण. स यश्च° । ४ क ख. छ. ण. °क्षुषा लि° । ५ ख. ञ. ध. °ध्येवोपास्यो° । ६ ट. °वाऽऽत्मोप° । ७ क. ग. ट. ड. °संप्रयुक्तं के° । घ. च. ठ. ण. °संपृक्तं के° । ङ ढ. °संयुक्तं के° । ८ क ग घ. ङ. च. ट ड. ढ. °त्मा । यो ।

प्रकाशस्वरूपः स इति गम्यते । दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि । इदं चास्याऽऽत्मनः सामर्थ्यादवगम्यते । आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं न तु व्यापृततया । यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं न तु व्यापृततयेति तद्वत् । मनोऽस्याऽऽत्मनो दैवममाकृतमितरेन्द्रियैरसाधारणं चक्षुश्चष्टे पश्यत्यनेनेति चक्षुः । वर्तमानकालविषयाणि चेन्द्रियाण्यतोऽदैवानि तानि । मनस्तु त्रिकालविषयोपलब्धिकरणं मृदितदोषं च सूक्ष्मव्यवहितादिसर्वोपलब्धिकरणं चेति दैवं चक्षुरुच्यते । स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोवियुक्तः सर्वात्मभावमापन्नः सन्नेष व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन्नेतेनैवेश्वरेण मनसैतान्कामान्सवितृप्रकाशवन्नित्यमवृत्तेन दर्शनेन पश्यन्रमते । कान्कामानिति विशिनष्टि—य एते ब्रह्मणि लोके हिरण्यनिधिवद्बाह्यविषयासङ्गानृतेनापिहिताः संकल्पमात्रलभ्यास्तानित्यर्थः ॥ ५ ॥

इन्द्रियैर्घ्राणादिभिरसंस्पृष्टं[३] तत्तद्द्वारेणानिष्पन्नमिति यावत् । केवलं मनोमात्रजनितमित्येतन्मन्वानि संपादयानीत्यर्थः[४] । यो वेदेत्यत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्षत्वान्मिथ्या प्रकृत्यर्थ( र्थ )रूपं तु संविन्मात्रमनपेक्षतया सत्यमात्मस्वरूपमित्याह—यो वेदेति । आत्मा संवेदनस्वभावश्चेत्तत्संसर्गादेव विषयसिद्धिसंभवाच्चक्षुरादिवैयर्थ्यं स्यादित्याशङ्क्याऽऽह—दर्शनादीति । अन्तःकरणवृत्तिर्दर्शनादिक्रिया । सा चाऽऽत्मनः संविदेकरसस्यासङ्गोदासीनस्य विषयसंसर्गभ्रमहेतुस्तन्निवृत्त्यर्थानि चक्षुरादीनि भवन्ति सार्थकानीत्यर्थः । तेषामुक्तरीत्या सार्थकत्वे गमकमाह—इदं चेति । करणानामुक्तं सार्थकत्वं प्रकृतस्य संविन्मात्रस्याङ्गत्वादेव स्वतो विषयसंबन्धानुपपत्त्या तत्संबन्धभ्रान्तिकारणान्तःकरणवृत्तिविशेषापेक्षया निर्धारितमित्यर्थः । आत्मनः संविन्मात्रस्वभावत्वे कथं कर्तृ[५]त्वव्यपदेश इत्याशङ्क्याऽऽह—आत्मन इति । य एषोऽक्षिणीत्यादि वाक्यं प्रपञ्चितं संप्रति स तत्रेत्यादि फलवाक्यं प्रपञ्चयितुमिन्द्रियान्तरेभ्यो मनसो वैलक्षण्यं दर्शयति—मनोऽस्येति । तस्य चक्षुष्ट्वेऽपि कुतो दैवत्वमित्याशङ्क्याऽऽह—वर्तमानेति । आगन्तुकदोषराहित्यं मृदितदोषत्वम् । सर्वेश्वरो व्यज्यते यस्मिन्विशुद्धे मनसि तन्मनः सर्वेश्वरं तदुपाधिरस्येति तथोक्तः । ईश्वरेण तदभिव्यञ्जकेनेत्येतत् । अविद्यादिप्रतिबन्धकस्याभावान्मनसा नित्यं प्रततं दर्शनं नित्याभिव्यक्तस्वरूपं चैतन्यं तेन पश्यन्निति योजना ॥ ६ ॥

तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां

१ ख. ग. घ. ङ. च. ञ. ट. ड. ढ. °ति । च° । २ घ. च. ट. °याण्येवेन्द्रि° । ३ ग. ट. °संपृक्तं त° । ४ ख. ग. छ. ञ. ट. ण. °र्थः । वे° । ५ ख. ञ. ण. °नः सच्चिदे° । ६ ग. °स्यासंयोगोदा° । ७ ग. ङ. °सीने वि° । ८ खं. ञ. °त्त्यर्थानि । ९ क. ग. ट. °तृत्व° ।

सर्वे च लोका आप्ताः सर्वे च कामाः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्य-स्तमात्मानमनुविद्य विजानातीति ह प्रजापति-रुवाच प्रजापतिरुवाच ॥ ६ ॥

इति च्छान्दोग्योपनिषद्यष्टमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा तस्मात्ततः श्रुत्वा तमात्मानमद्य-त्वेऽपि देवा उपासते । तदुपासनाच्च तेषां सर्वे च लोका आप्ताः प्राप्ताः सर्वे च कामाः । यदर्थं हीन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः । तद्युक्तं देवानां महाभाग्यत्वान्न त्विदानीं मनुष्याणामल्पजीवितत्वान्मन्दतरप्रज्ञत्वाच्च संभवतीति प्राप्त इदमुच्यते—स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिदानींतनोऽपि । कोऽसौ । इन्द्रादिव-द्यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच । अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः । द्विवचनं प्रक-रणसमाप्त्यर्थम् ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्येऽष्टमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

तं वा एतमित्यादि व्याचष्टे—यस्मादिति । पदार्थमुक्त्वा वाक्यार्थमाह—यदर्थं हीति । स सर्वांश्चेत्यादिवाक्यमाशङ्क्योत्तरत्वेनोत्थाप्य व्याचष्टे—तद्युक्तमित्या-दिना । यथोक्तं फलं तच्छब्दार्थः । प्रकरणं निर्विशेषब्रह्मात्मैकत्वज्ञानविषयम् ॥ ६ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकाया-मष्टमाध्यायस्य द्वादशः खण्डः ॥ [redacted]२ ॥

—०*०—

( अथाष्टमाध्यायस्य त्रयोदशः खण्डः ) ।

---

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामी-त्यभिसंभवामीति ॥ १ ॥

इति च्छान्दोग्योपनिषद्यष्टमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

===

१ ख. ञ. ण. °मद्यापि । २ ख. ड. ञ. °भाग्यान्न । ठ. °भाग्यानां नत्वि° । ३ क. °मत्यल्प° ।

श्यामाच्छबलं प्रपद्य इत्यादिमन्त्राम्नायः पावनो जपार्थः[1] ध्यानार्थो वा। श्यामो गम्भीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्मात्यन्तदुरवगाह्यत्वात्तद्धार्दं ब्रह्म ज्ञात्वा[2] ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शबलोऽरण्याद्यनेककाममिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपाताद्वोर्ध्वं गच्छेयम्। यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाय श्यामं प्रपद्ये हार्दभावं[3] प्रपन्नोऽस्मीत्यभिप्रायः। अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्य इत्यर्थः। कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते—अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांस्वादि[4] च रोमतोऽपनीय यथा निर्मलो भवत्येवं[5] हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चन्द्र इव[6] च राहुग्रस्तस्तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो[7] भवति यथैवं[8] धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयमिहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसंभवामीति[9]। द्विर्वचनं मन्त्रसमाप्त्यर्थम्[10] ॥ १ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्येऽष्टमाध्यायस्य त्रयोदशः खण्डः॥ १३ ॥

—:⊙-⊙-⊙-⊙:—

दहरप्रकरणं[11] विद्याप्रकरणं उपास्यस्तुत्यर्थं प्रसङ्गादुक्तं तत्प्रकरणपरिसमाप्त्यर्थं[12] प्रकृताया दहरविद्यायाः शेषभूतं जपविधानार्थमारभते—श्यामादिति। अत्यन्तदुरवगाह्यत्वाद्[13]ध्यानहीनानामिति[14] शेषः। कथं जीवतो ब्रह्मलोकप्राप्तिरित्याशङ्क्याऽऽह—मनसेति। न तर्हि मुख्या तत्प्राप्तिरित्याशङ्क्याऽऽह—शरीरेति। विपरीतपाठं हेतुत्वेनेति व्याचष्टे—यस्मादिति। हेतुः प्रतिज्ञया योज्यते—अत इति। दृष्टान्तमाकाङ्क्षापूर्वकमवतार्य व्याचष्टे—कथमित्यादिना। शरीरस्य त्याज्यत्वे हेतुमाह—सर्वानर्थेति। इतिशब्दो ध्यानसमाप्त्यर्थो[15] दहरोऽस्मिन्नन्तराकाश इति ॥ १ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायामष्टमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

( अथाष्टमाध्यायस्य चतुर्दशः खण्डः )

---

## आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म

---

१ ख. घ. ञ. ड. ढ. ण. °र्थश्चाऽऽध्या° । २ ठ ण. जित्वा । ३ क. हार्दं ब्रह्मभा° । घ. च. हार्दं भा° । ४ क. ण. पांश्वादि । ५ क. ग. घ. ङ. च. ञ. ट. ड. ढ. °वतीत्ये । ६ ट. °ह्यजपेन । ७ ग. ङ. ट. ठ ड. ढ. °व रा । ८ ठ. °स्वरतरो । ९ ड. °ति तथै° । १० क. ट. °न्त्रपरिस° । ११ ग. ट. °रवि° । १२ ग. ट. तत्परि° । १३ क. ग. छ. ट. ण. °त्यन्तं दु° । १४ क. °त्वाज्ज्ञानं° । १५ ग. ट. ध्यातुर्ध्यान° ।

प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः[1] श्येतमदत्कमदत्कं[2] श्येतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥ १ ॥

इति च्छान्दोग्योपनिषद्यष्टमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

आकाशो वा इत्यादि ब्रह्मणो लक्षणनिर्देशार्थमाध्यानाय । आकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा । आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च । स चाऽऽकाशो नामरूपयोः स्वात्मस्थयोर्जगद्[3]बीजभूतयोः सलिलस्येव फेन[4]स्थानीययोर्निर्वहिता निर्वोढा व्याकर्ता । ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये[5] वर्तेते, तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं यदित्येत[6]त्तद्ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथाऽपि तयोर्निर्वोढृत्वलक्षणं ब्रह्मेत्यर्थः । इदमेव[7] मैत्रेयीब्राह्मणेनोक्तं[8] चिन्मात्रानुगमात्सर्वत्र[9] चित्स्वरूपतैवेति[10] गम्यत[11] एकवाक्यतां[12] । कथं तदवगम्यत इत्याह—स आत्मा हि नाम सर्वआत्माजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीयाशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगन्तव्यम् । तच्चाऽऽत्मा ब्रह्मामृतममरणधर्मा । अत ऊर्ध्वं मन्त्रः । प्रजापतेश्चतुर्मुखस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम् । किंच यशोऽहं यशो नामाऽऽत्माऽहं भवामि ब्राह्मणानाम् । ब्राह्मणा एव हि विशेषतस्तमुपासते[13] ततस्तेषां यशो[14] भवामि । तथा राज्ञां[15] विशां च[16] । तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि । तद्यशोऽहमनुप्रापत्स्यनुप्राप्तुमिच्छामि । स हाहं यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणा[17]नामात्मा । किमर्थं महमेवं प्रपद्य इति, उच्यते—श्येतं[18] वर्णतः पक्वबदरसमं[19] रोहितम्[20][21] । तथाऽदत्कं

---

१ क. °शः श्वेत° । २ क. °त्कं२ श्वेतं । ३ ख. ग. ञ. ट. ड. ढ. °जयोः । ४ क. ग. घ. ङ. च. ट. ठ. ड. ढ. ण. °नसस्था° । ५ क. °दि तद्ब्र° । ६ ग. ङ. ट. ठ. ड. °तद्ब्र° । ७ ङ. ड. ढ. °व कथं । ८ क. °ह्मणोक्तं । ९ ण. °णे वर्णितं चि° । १० ण. °तैव ग° । ११ ठ. °म्यते तदेकवाक्यत्वमिहापि कथं । १२ क. °क्यतयाऽऽत्मा । क° । १३ क. °ते अत° । १४ ङ. ड. ढ. भवति । १५ ठ. ण. °ज्ञां यशो वि° । १६ ठ. ण. च. यशस्तेऽप्य° । १७ क. ण. °णानां यशसामा° । १८ क. ग. ङ. च. श्वेतं । १९ ण. °समरो° । २० ख. घ. च. ञ. लोहितं । २१ ग. ट. °हितं ब्रह्मचिह्नं योनिशब्दितं विलक्षणं तथा° ।

दन्तरहितमप्यदत्कं भक्षयितृ श्वैतं[1] व्यञ्जनं तत्सेविनां तेजोबलवीर्यविज्ञानधर्माणामपहन्तृ विनाशयित्रित्येतत् । यदेवंलक्षणं श्वेतं लिन्दु पिच्छलं[2] तन्माऽभिगां माऽभिगच्छेयम् । द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थम् ॥ १ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्येऽष्टमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

लक्षणनिर्देशस्य प्रकृतोपयोगं दर्शयति–आध्यानायेति । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायानित्याद्याः श्रुतयः । आकाशशब्देनाऽऽत्मनः श्रुतिषु प्रसिद्धत्वे हेतुमाह– आकाश इवेति । ते यदन्तरेत्यत्र ते इति पदं प्रथमाद्विवचनान्तं गृहीत्वा व्याख्याय द्वितीयाद्विवचनान्तं षष्ठ्यर्थमादाय व्याचष्टे—तयोरिति । यदन्तरेति समस्तं पदं पूर्वत्र व्याख्यातमधुना तु व्यस्तं व्याकृतं तदेव व्याकरणं संक्षिपति–नामरूपाभ्यामिति । ताभ्यामस्पृष्टं चेत्कथं तन्निर्वाहकमित्याशङ्क्याऽऽह—नामरूपाभ्यामस्पृष्टमिति । मायावशादिति शेषः । आत्मत्वेऽपि कथं करतलामलकवद्ब्रह्मणोऽपरोक्षत्वमत आह–आत्मा हीति । तेन स्वसंवेद्यत्वेनेति[3] यावत् । कुतो देहद्वयोपहितस्याऽऽत्मनः स्वसंवेद्यत्वं तत्राऽऽह—अशरीर इति । परिच्छिन्नस्याशरीरत्वमयुक्तमित्याशङ्क्याऽऽह–व्योमवदिति । ब्रह्मैव प्रत्यक्षभूतानीति कथमवगतमित्याशङ्क्याऽऽह–आत्मेति । अनात्मत्वं चेद्ब्रह्मत्वमसङ्गतमतश्चमृतं ब्रह्म व्यक्तव्यमित्यर्थः । उपास्यस्वरूपं दर्शयित्वा तदुपासकस्य प्रार्थनामन्त्रमुत्थाप्य व्याकरोति—अहमिति । प्रथमतो ब्राह्मणग्रहणे हेतुमाह–ब्राह्मणा एवेति । विशेष्यं[4] निर्दिशति—श्वैतं व्यञ्जनमिति । योनिशब्दितं प्रजननेन्द्रियमित्यर्थः । कथं तद्भक्षयितृ भवेत्तदाह–तत्सेविनामिति । तदभिगमनं नाम गर्भवासस्तस्यातिशयेनानर्थहेतुत्वं ज्ञापयितुं द्विर्वचनमित्यर्थः ॥ १ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायामष्टमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

( अथाष्टमाध्यायस्य पञ्चदशः खण्डः )।

---

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रि-**

---

१ ग. ङ. च. श्वेतं । २ ख. घ. ङ. च. ट. ण. पिच्छिलं । ३ क. ख. छ. ञ. ण. वेदनत्वे' । ४ क. ख. ग. ञ. ट. ण. विशेषं ।

याणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥

इति च्छान्दोग्योपनिषद्यष्टमाध्यायस्य पञ्चदशः खण्डः ॥१५॥

===

इति च्छान्दोग्योपनिषद्ब्राह्मणेऽष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

ॐ * आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।

ॐ शान्तिः शान्तिः शान्तिः ॥

---

तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षरमित्याद्यैः सहोपासनैस्तद्वाचकेन ग्रन्थेनाष्टाध्यायीलक्षणेन[1] सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपायोवाच । असावपि[2] मनवे स्वपुत्राय । मनुः प्रजाभ्य इत्येवं श्रुत्यर्थसंप्रदायपरम्परयाऽऽगतमुपनिषद्विज्ञानमद्यापि विद्वत्स्ववगम्यते । यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या सफलाऽवगम्यते तथा कर्मणां[3] न कश्चनार्थ इति प्राप्ते तदानर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो[4] विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते—आचार्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा यथाविधानं यथा[5]स्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः । सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह—गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः

* इयं शान्तिरुपनिषदारम्भेऽपि ज्ञेया ।

१ थ. °सर्वा भू° । २ क. ग. घ. ङ. च. ट. ठ. ड. ण °ध्यायल° । ३ ख. घ. ङ. च ज. स ञ° । ४ ख. च. ञ. ठ. ण. सोऽपि । ५ क ग घ. ङ ट ठ. ड. ढ. कर्मणा । ६ ग. ङ. ढ, °र्मविद्भि° । च. ट. °र्म वि° । ७ क °थश्रुत्यु° ।

कालस्तेन कालेन वेदमधीत्येत्यर्थः । एवं हि नियमवताऽधीतो वेदः कर्मज्ञानफलप्राप्तये भवति नान्यथेत्यभिप्रायः । अभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः । तत्रापि गार्हस्थ्यविहितानां कर्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते—शुचौ विविक्तेऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्यासं च कुर्वन्धार्मिकान्पुत्राञ्शिष्यांश्च धर्मयुक्तान्विदधद्धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्योपसंहृत्येन्द्रियग्रहणात्कर्माणि च संन्यस्याहिंसन्हिंसां परपीडामकुर्वन्सर्वभूतानि स्थावरजंगमानि भूतान्यपीडयन्नित्यर्थः । भिक्षानिमित्तमप्याटनादिनाऽपि परपीडा आह—अन्यत्र तीर्थेभ्यः । तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्वाश्रमिणां चैतत्समानम् । तीर्थेभ्योऽन्यत्राहिंसैवेत्यन्ये वर्णयन्ति । कुटुम्ब एवैतत्सर्वं कुर्वन्स खल्वधिकृतो यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैव वर्तयन्ब्रह्मलोकमभिसंपद्यते देहान्ते । न च पुनरावर्तते शरीरग्रहणाय । पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् । अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक्ततो नाऽऽवर्तत इत्यर्थः । द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १ ॥

इति च्छान्दोग्योपनिषच्छांकरभाष्येऽष्टमाध्यायस्य पञ्चदशः खण्डः ॥१५॥

---

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ छान्दोग्योपनिषद्भाष्येऽ-

ष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

उक्तविज्ञानस्यौत्प्रेक्षिकत्वशङ्कां व्युदस्यन्ननादिपारम्पर्यागतत्वं दर्शयति—तद्धैतदिति । सोपकरणमुपकरणैः शमादिभिः सहितमिति यावत् । तद्द्वारेण हिरण्यगर्भ-

---

१ ग. ट. ण. °तो यो वे° । २ ख. ज. °थेत्याभिस° । ३ क. °नो नित्यनैमित्तिकं कर्माधि° । ४ ग. ङ. ठ ड. ढ. °शक्तित° । ख. घ. च. ञ. ण. यथाशक्तित° । ५ क. ठ. ण. °हृत्य सर्वेन्द्रि° । ६ ख. ञ. °न्सन्सर्व° । ७ ठ. °सपर्यट° । ८ ग. ङ. ट. ढ. °ना प° । ९ ख. घ. ञ. ठ. ढ. ण. °पि पी° । १० च. °न्यत्र हिं° । ११ ख. ञ. ढ. °क्तेनैव प्र° । १२ क. ख. ग. ङ. ञ. ट. ठ. ड. ढ. ण. °णैवं । १३ ग. ट. °धाद्धार्मिकान् । अ° । १४ ठ. °तो मुच्यते नाऽऽवर्तते पुनस्तस्मान्माऽऽगमनमाशङ्क्यते गमनादतो नाऽऽवर्तत इत्युच्यते । द्विर° ।

द्वारेणेत्यर्थः । विद्याप्रकरणं समाप्याविद्वदनुष्ठितस्य कर्मणः साफल्यमविद्वत्संतोषार्थं कथयति—यथेत्यादिना । इहेति प्रकृतोपनिषदुक्तिः । प्राङ्मुखत्वपवित्रपाणित्वाद्यो नियमाः । भिक्षाशनस्नानाचमनादिविधिः । किमित्येष नियमोऽध्ययने कथ्यते तत्राऽऽह—एवं हीति । तत्रापीति सप्तम्या यथोक्तोऽधिकारी गृहीतः । एतत्सर्वं स्वयं कुर्वन्ब्रह्मलोकमभिसंपद्यत इति संबन्धः । एवं वर्तयन्नित्यस्य व्याख्यानमेवं यथोक्तेन प्रकारेण कुर्वन्निति । अप्राप्तप्रतिषेधाशङ्कां वारयति—पुनरावृत्तेरिति । चन्द्रलोकादिवद्ब्रह्मलोकादपि प्राप्ता पुनरावृत्तिस्तस्या न चेत्यादिना प्रतिषेधान्नाप्राप्तप्रतिषेधप्रसक्तिरित्यर्थः । अपुनरावृत्तिवाक्यस्थान्यक्षराणि व्याकरोति—अर्चिरादिनेति । प्रागिति महाप्रलयात्पूर्वकालोक्तिः । ततो ब्रह्मलोकादित्यर्थः ॥ १ ॥

इति श्रीमदानन्दगिरिविरचितायां छान्दोग्योपनिषच्छांकरभाष्यटीकायामष्टमाध्यायस्य पञ्चदशः खण्डः ॥ १९ ॥

---

वियदादिजगज्जातं जातमज्ञानतो यतः ।
तदस्मि नामरूपादिविरहि ब्रह्म निर्भयम् ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः ॥ ८ ॥

---

१ ग. ट. °माप्य वि° । २ ग. ट. °वें कु° ।

समाप्तेयमानन्दगिरिकृतटीकासंवलितशांकरभाष्य-
समेता छान्दोग्योपनिषत् ।

# अथ च्छान्दोग्योपनिषद्विभागानां वर्णानुक्रमणिका प्रारभ्यते ।

—:०⊙:०—

समाप्तेयं छान्दोग्योपनिषद्विभागानां वर्णानुक्रमणिका ।

| ग्रन्थनाम् । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... .... | ३ | १९ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... .... .... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । .... | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । .... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । .... ... .... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... .... .... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागषट्कात्मकम् । | २९ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम् । ” ” .... | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभागम् । | ८ | ९ |
| १०२ ब्रह्मवैवर्तपुराणम्— भागद्वयात्मकम् । ... ... ... | ९ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... .... | १ | ९ |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकरादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ९ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ९७ | आचारभूषणम् | ४ | ६ |
| ९८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ९ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | कठोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गोतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत् (शां०) | ९ | ० |
| ६३ | छान्दोग्योपनिषत्(रामा०) | ३ | १२ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्ति० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टु रा० स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १५ |
| ९६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | ११ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १५ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| २ | पुरुषसूक्तम् | ० | ४ |
| ९९ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |

| ग्रन्थाङ्काः | मूल्यम् रू० | आ० |
|---|---|---|
| १०० प्रायश्चित्तेन्दुशेखरः | १ | १० |
| १९ बृहदारण्यकोपनिषत् | ८ | ० |
| ३४ ,, (रामानुजटी०) | ३ | ४ |
| ३१ ,, ( मिताक्षरा ) | २ | १२ |
| १६ बृहदारण्यकोपनिषद्भा० | २२ | ८ |
| ७१ बृहद्योगतरङ्गिणी | १० | १२ |
| ६८ बृहद्ब्रह्मसंहिता | १ | १२ |
| २८ ब्रह्मपुराणम् | ६ | ४ |
| १०२ ब्रह्मवैवर्तपुराणम् (भा० २) | ९ | ४ |
| २१ ब्रह्मसूत्राणि ( शां० ) | १२ | ० |
| ६७ ,, ब्रह्मामृतवर्षिणी-दीपिकासमेतानि | ४ | ८ |
| ८२ ब्रह्मसूत्रवृत्तिः | २ | ७ |
| ३४ भगवद्गीता (शां० भा०) | २ | ० |
| ३४ ,, ( सटीकशां० भा० ) | ६ | ४ |
| ४४ ,, ( पैशाचभाष्य० ) | १ | ८ |
| ४५ ,, (मधुसूदनीश्रीधरीटी० | ५ | ४ |
| ९२ ,, ( रामानुजीया ) | ७ | ८ |
| ९९ भास्करीयबीजगणि. सटी. | २ | ० |
| ७५ भाष्यार्थरत्नमाला | ४ | ४ |
| ५४ मत्स्यपुराणम् | ६ | ० |
| १० माण्डूक्योपनिषत् | २ | ५ |
| ९७ मीमांसादर्शनम् | २५ | ९ |
| ९ मुण्डकोपनिषत् | ० | १० |
| ६० यतिधर्मसंग्रहः | १ | १२ |
| ५० यतीन्द्रमतदीपिका | १ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः | १३ | ० |
| ४ योगरत्नाकरः | ५ | ० |
| १९ रसरत्नसमुच्चयः | ३ | १२ |
| २ रुद्राध्यायः | १ | ६ |
| ८० वाक्यवृत्तिः | ० | ८ |
| ८९ वायुपुराणम् | ४ | १२ |
| ८६ विधानमाला | ४ | ४ |
| २७ वृन्दमाधवः | ६ | १२ |
| ७७ वेदान्तसूत्रमुक्तावलिः | २ | ६ |
| ४३ वैयाकरणसिद्धान्तकारिकाः | ० | १२ |
| २३ वैयासकन्यायमालाविस्तरः | १ | १२ |
| २२ श्रीमच्छंकरदिग्विजयः | ६ | ० |
| १०१ शांकरपादभूषणम् | ८ | ५ |
| ६५ शाङ्खायनब्राह्मणम् | १ | ४ |
| ९० शाङ्खायनारण्यकम् | ० | ९ |
| शिवभारतम् | १ | ५ |
| ९९ श्राद्धमञ्जरी | २ | ० |
| १७ श्वेताश्वतरोपनिषत् | २ | ४ |
| २४ संस्कारपद्धतिः | २ | ८ |
| ८३ संक्षेपशारीरकम् | ९ | १ |
| ३५ संगीतरत्नाकरः | १० | ४ |
| ५३ सत्याषाढश्रौतसूत्रम् | २८ | ५ |
| ५१ सर्वदर्शनसंग्रहः | २ | ० |
| ४० संध्याभाष्यसमुच्चयः | २ | ० |
| ३९ संस्काररत्नमाला | १२ | ८ |
| सिद्धान्तदर्शनम् | १ | ४ |
| २५ सूतसंहिता | ११ | ८ |
| १८ सौरपुराणम् | ३ | ० |
| ४८ स्मृतीनां समुच्चयः | ५ | ० |
| ७० स्मृत्यर्थसारः | १ | १० |
| ३१ हस्त्यायुर्वेदः | ७ | ६ |